घ्नणिगोत्रा, गार्गिमता, गौरिहता ॥ ६४ ॥

भोगवत्–गौरिमतोर्नाम्नि । ३ । २ । ६५ ।

अनयोर्ङ्यन्तयोः संज्ञायां तरादिषु प्रत्ययेषु ध्रुवादौ चोत्तरपदे एकार्थे ह्रस्वः स्यात् । भोगवतितरा, गौरिमतितमा, भोगवतिरूपा, गौरिमतिकल्पा, भोगवतिब्रुवा, गौरिमतिचेली, भोगवतिगोत्रा, गौरिमतिमता, भोगवतिहता । नाम्नीति किम् ? भोगवतितरा, भोगवत्तरा, भोगवतीतरा ॥ ६५ ॥

नवैकस्वराणाम् । ३ । २ । ६६ ।

एकस्वरस्य ङ्यन्तस्य तरादौ प्रत्यये ध्रुवादौ चोत्तरपदे स्त्र्येकार्थे वा ह्रस्वः स्यात् । स्त्रितरा, स्त्रीतरा । ज्ञितरा, ज्ञीतरा । ज्ञितमा, ज्ञीतमा । ज्ञिब्रुवा, ज्ञीब्रुवा । एकस्वराणामिति किम् ? कुटीतरा ॥ ६६ ॥

ऊङः । ३ । २ । ६७ ।

ऊङन्तस्य तरादौ चोत्तरपदे स्त्र्येकार्थे वा ह्रस्वः स्यात् । ब्रह्मबन्धुतरा, ब्रह्मबन्धूतरा । कद्रुब्रुवा, कद्रूब्रुवा ॥ ६७ ॥

महतः कर-घास-विशिष्टे डाः । ३ । २ । ६८ ।

करादावुत्तरपदे महतो डा वा स्यात् । महाकरः, महत्करः । महाघासः, महद्घासः । महाविशिष्टः, महद्विशिष्टः ॥ ६८ ॥

स्त्रियाम् । ३ । २ । ६९ ।

स्त्रीवृत्तेर्महतः करादावुत्तरपदे नित्यं डाः स्यात् । महाकरः, महाघासः, महाविशिष्टः ॥ ६९ ॥

जातीयैकार्थेऽच्वेः । ३ । २ । ७० ।

महतोऽच्व्यन्तस्य जातीयरि ऐकार्थ्ये चोत्तरपदे डाः स्यात्। महाजातीयः, महावीरः । जातीयैकार्थ्य इति किम् ? महत्तरः । अच्वेरिति किम् ? महद्भूता कन्या ॥ ७० ॥

न पुम्वन्निषेधे । ३ । २ । ७१ ।

महतः पुम्वन्निषेधविषये उत्तरपदे डा न स्यात् महतीप्रियः ॥ ७१ ॥

इच्यस्वरे दीर्घआच्च ॥ ३ । २ । ७२ ॥

इजन्तेऽस्वरादावुत्तरपदे पूर्वपदस्य दीर्घत्वं आच्च स्यात् । मुष्टीमुष्टि, मुष्टामुष्टि । अस्वर इति किम् ? अस्यसि ॥ ७२ ॥

हविष्यष्टनः कपाले ॥ ३ । २ । ७३ ॥

हविष्यर्थे कपाले उत्तरपदेऽष्टनो दीर्घः स्यात् । अष्टाकपालं हविः । हविषीति किम् ? अष्टकपालम् । कपाल इति किम् ? अष्टपात्रं हविः ॥ ७३ ॥

गवि युक्ते । ३ । २ । ७४ ।

युक्तेऽर्थे गव्युत्तरपदेऽष्टनो दीर्घः स्यात् । अष्टागवं शाकटम् । युक्त इति किम् ? अष्टगुर्क्षेत्रः ॥ ७४ ॥

नाम्नि । ३ । २ । ७५ ।

अष्टन उत्तरपदे संज्ञायां दीर्घः स्यात् । अष्टापदः कैलाशः । नाम्नीति किम् ? अष्टदंष्ट्रः ॥ ७५ ॥

---

१ "प्रकारे जातीयर्" (७-२-७५) इति सूत्रेण जातीयर्प्रत्ययः । महान् प्रकारोऽस्य स महाजातीयः, स्त्रियां तु महाजातीया । एवं पटुजातीयः । महांश्चासौ वीरश्च महावीर इत्यैकार्थ्योदाहरणम् । महती प्रियास्य स महतीप्रिय इत्यपि ध्येयम् ।

कोटर-मिश्रक-सिध्रक-पुरग-सारिकस्य वणे ।३।२।७६।

एषां कृतणत्वे वने उत्तरपदे संज्ञायां दीर्घः स्यात्। कोटरावणम्, मिश्रकावणम्, सिध्रकावणम्,पुरगावणम्, सारिकावणम् ॥ ७६ ॥

अञ्जनादीनां गिरौ । ३ । २ । ७७ ।

एषां गिरावुत्तरपदे नाम्नि दीर्घः स्यात्। अञ्जनागिरिः, कुक्कुटागिरिः ॥ ७७ ॥

अनजिरादिबहुस्वर-शरादीनां मतौ । ३ । २ । ७८ ।

अजिरादिवर्जबहुस्वराणां शरादीनां च मतौ प्रत्यये नाम्नि दीर्घः स्यात्। उदुम्बरावती, शरावती, वंशावती। अनजिरादीति किम् ? अजिरवती, हिरण्यवती ॥७८॥

ऋषौ विश्वस्य मित्रे । ३ । २ । ७९ ।

ऋषावर्थे मित्रे उत्तरपदे विश्वस्य नाम्नि दीर्घः स्यात्। विश्वामित्रः ॥ ७९ ॥

नरे । ३ । २ । ८० ।

नरे उत्तरपदे नाम्नि विश्वस्य दीर्घः स्यात्। विश्वानरः कश्चित् ॥ ८० ॥

वसु-राटोः । ३ । २ । ८१ ।

अनयोरुत्तरपदयोर्विश्वस्य दीर्घः स्यात् । विश्वावसुः, विश्वाराट् ॥ ८१ ॥

वलच्यपित्रादेः । ३ । २ । ८२ ।

वलच्प्रत्यये पित्रादिवर्जानां दीर्घः स्यात्। आसुतीवलः । अपित्रादेरिति किम् ? पितृवलः, मातृवलः ॥८२॥

### चितेः कचि । ३ । २ । ८३ ।

चितेः कचि दीर्घः स्यात् । एकचितीकः ॥ ८३ ॥

### स्वामिचिह्नस्याऽविष्टाऽष्ट-पञ्च-भिन्न-छिन्न-च्छिद्र-स्रुव-स्वस्तिकस्य कर्णे । ३ । २ । ८४ ।

स्वामी चिह्नयते येन तद्वाचिनो विष्टादिवर्जस्य कर्णे उत्तरपदे दीर्घः स्यात् । दात्राकर्णः[१] पशुः । स्वामिचिह्नस्येति किम् ? लम्बकर्णः । विष्टादिवर्जनं किम् ? विष्टकर्णः, अष्टकर्णः ॥ ८४ ॥

### गतिकारकस्य नहि-वृति-वृषि-व्यधि-रुचि-सहि-तनौ क्वौ । ३ । २ । ८५ ।

गतिकारकयोर्नह्यादौ क्विबन्ते उत्तरपदे दीर्घः स्यात् । उपानत्, नीवृत्, प्रावृट्, श्वावित्, नीरुक्, ऋतीषट्, जलासट्, परीतत् ॥ ८५ ॥

### घञ्युपसर्गस्य बहुलम् । ३ । २ । ८६ ।

घञन्ते उत्तरपदे उपसर्गस्य बहुलं दीर्घः स्यात् । नीक्लेदः, नीवारः । बाहुलकात् क्वचिद्वा, प्रतीवेशः, प्रतिवेशः । क्वचिन्न, विषादः, निषादः ॥ ८६ ॥

### नामिनः काशे । ३ । २ । ८७ ।

नाम्यन्तस्योपसर्गस्याजन्ते काशे उत्तरपदे दीर्घः स्यात् । नीकाशः, वीकाशः । नामिन इति किम् ? प्रकाशः ॥ ८७ ॥

---

१ दात्रं चिह्नं कर्णे यस्य ॥ पशुर्दात्राकर्णः । पञ्चकर्ण इत्यादिषु न दीर्घत्वं, तेषां विष्टादिमध्यगत्वात् ।

दस्ति । ३ । २ । ८८ ।

दो यस्तादिरादेशस्तस्मिन् परे नाम्यन्तस्योपसर्गस्य दीर्घः स्यात् । नीत्तम्, वीत्तम् । द इति किम् ? वितीर्णम् । तीति किम् ? सुदत्तम् ॥ ८८ ॥

अपील्वादेर्वहे । ३ । २ । ८९ ।

पील्वादिवर्जस्य नाम्यन्तस्य वहे उत्तरपदे दीर्घः स्यात् । ऋषीवहम्, मुनीवहम् । अपील्वादेरिति किम् ? पीलुवहम्, दारुवहम् ॥ ८९ ॥

शुनः । ३ । २ । ९० ।

अस्योत्तरपदे दीर्घः स्यात् । श्वादन्तः, श्वावराहम् ॥ ९० ॥

एकादश-षोडश-षोडन्-षोढा-षड्ढा । ३ । २ । ९१ ।

एकादयो दशादिषु कृतदीर्घत्वादयो निपात्यन्ते । एकादश, षोडश, षड्दन्ता अस्य षोडन्, षोढा, षड्ढा ॥ ९१ ॥

द्वित्र्यष्टानां द्वा-त्रयोऽष्टाः प्राक्शताद्, अनशीति-बहुव्रीहौ । ३ । २ । ९२ ।

एषां यथासंख्यमेते प्राक्शतात् संख्यायामुत्तरपदे स्युः, नत्वशीतौ बहुव्रीहिविषये च । द्वादश, त्रयोविंशतिः, अष्टात्रिंशत् । प्राक्शतादिति किम्? द्विशतम्, त्रिशतम्, अष्टसहस्रम् । अनशीतिबहुव्रीहाविति किम् ? द्व्यशीतिः, द्वित्राः ॥ ९२ ॥

---

१ तकारादिरादेशः ।

२ षोडन्शब्दस्य षोडन् षोडन्तौ षोडन्तः । षोडता षोडद्भ्यामिति पचन्वद्रूपाणि स्युः । स्त्रियां षोडतीत्यस्य नदीवत् । धाप्रत्यये षोढा । षड्ढा इति तु षड् दधातीति डे प्रत्यये सिध्यति ।

चत्वारिंशदादौ वा । ३ । २ । ९३ ।

द्वित्र्यष्टानां प्राक्शताच्चत्वारिंशदादावुत्तरपदे यथासंख्यं द्वात्रयोऽष्टा वा स्युः, अनशीतिबहुव्रीहौ । द्वाचत्वारिंशत्, द्विचत्वारिंशत् । त्रयश्चत्वारिंशत्, त्रिचत्वारिंशत् । अष्टाचत्वारिंशत्, अष्टचत्वारिंशत् ॥ ९३ ॥

हृदयस्य हृत्, लास-लेखाऽण्-ये । ३ । २ । ९४ ।

अस्य लासलेखयोरुत्तरपदयोरणि ये च प्रत्यये हृत् स्यात् । हृल्लासः, हृल्लेखः, हार्दम्, हृद्यः ॥ ९४ ॥

पदः पादस्याऽज्याऽति-गोपहते । ३ । २ । ९५ ।

पादस्याज्यादावुत्तरपदे पदः स्यात् । पदाजिः[१], पदातिः, पदगः, पदोपहतः ॥ ९५ ॥

हिम-हति-काषि-ये पद् । ३ । २ । ९६ ।

हिमादावुत्तरपदे ये च प्रत्यये पादस्य पद् स्यात् । पद्धिमम्, पद्धतिः, पत्काषी, पद्याः[२] शर्कराः ॥ ९६ ॥

ऋचः शसि । ३ । २ । ९७ ।

ऋचां पादस्य शादौ शस्प्रत्यये पद् स्यात् । पच्छो गायत्रीं शंसति । ऋच इति किम् ? पादशः श्लोकं वक्ति । द्विःशपाठात् स्यादिशसि न स्यात्, ऋचः पादान् पश्य ॥ ९७ ॥

शब्द-निष्क-घोष-मिश्रे वा । ३ । २ । ९८ ।

शब्दादावुत्तरपदे पादस्य पद् वा स्यात् । पच्छब्दः,

१ पादाभ्यामजति, अतति, गच्छति, उपहत इति पदाजिः, पदातिः, पदगः पदोपहतः ।

२ पादौ विध्यन्ति पद्याः शर्करा ।

पादशब्दः। पन्निष्कः, पादनिष्कः। पद्घोषः, पादघोषः। पन्मिश्रः, पादमिश्रः ॥ ९८ ॥

नस् नासिकायाः तः-क्षुद्रे । ३ । २ । ९९ ।

नासिकायास्तस्प्रत्यये क्षुद्रे चोत्तरपदे नस् स्यात्। नस्तः, नःक्षुद्रः ॥ ९९ ॥

येऽवर्णे । ३ । २ । १०० ।

नासिकाया ये प्रत्यये वर्णादन्यत्रार्थे नस् स्यात्। नस्यम्। य इति किम्? नासिक्यं पुरम्। अवर्णे इति किम्? नासिक्यो वर्णः ॥ १०० ॥

शिरसः शीर्षन् । ३ । २ । १०१ ।

शिरसो ये प्रत्यये शीर्षन् स्यात्। शीर्षण्यः स्वरः, शीर्षण्यं तैलम्। य इत्येव? शिरस्तः, शिरस्यति ॥१०१॥

केशे वा । ३ । २ । १०२ ।

शिरसः केशविषये ये प्रत्यये शीर्षन् वा स्यात्। शीर्षण्याः, शिरस्याः केशाः ॥ १०२ ॥

शीर्षः स्वरे तद्धिते । ३ । २ । १०३ ।

शिरसः स्वरादौ तद्धिते शीर्षः स्यात्। हास्तिशीर्षिः, शीर्षिकः ॥ १०३ ॥

उदकस्योदः पेषं-धि-वास-वाहने । ३ । २ । १०४ ।

उदकस्य पेषमादावुत्तरपदे उदः स्यात्। उदपेषं पिनष्टि, उदधिर्घटः, उदवासः, उदवाहनः ॥ १०४ ॥

वैकव्यञ्जने पूर्ये । ३ । २ । १०५ ।

उदकस्यासंयुक्तव्यञ्जनादौ पूर्यमाणार्थे उत्तरपदे उदो

वा स्यात् । उदकुम्भः, उदककुम्भः । व्यञ्जन इति किम् ? उदकामत्रम् । एकेति किम् ? उदकस्थालम् । पूर्वं इति किम् ? उदकदेशः ॥ १०५ ॥

## मन्थौदन-सक्तु-बिन्दु-वज्र-भार-हार-वीवध-गाहे वा । ३ । २ । १०६ ।

एषूत्तरपदेषु उदकस्योदो वा स्यात् । उदमन्थः, उदकमन्थः । उदौदनः, उदकौदनः । उदसक्तुः, उदकसक्तुः । उदबिन्दुः, उदकबिन्दुः । उदवज्रः, उदकवज्रः । उदभारः, उदकभारः । उदहारः, उदकहारः । उदवीवधः; उदकवीवधः । उदगाहः, उदकगाहः ॥ १०६ ॥

## नाम्न्युत्तरपदस्य च । ३ । २ । १०७ ।

उदकस्य पूर्वपदस्योत्तरपदस्य च संज्ञायामुदः स्यात् । उदमेघः, उदवाहः, उदपानम्, उदधिः, लवणोदः, कालोदः ॥ १०७ ॥

## ते [१]लुग्वा । ३ । २ । १०८ ।

संज्ञाविषये पूर्वोत्तरपदे लुग् वा स्यात् । देवदत्तः,देवः, दत्तः ॥ १०८ ॥

## द्व्यन्तरनवर्णोपसर्गादप ईप् । ३ । २ । १०९ ।

द्व्यन्तर्भ्यामवर्णान्तवर्जोपसर्गेभ्यश्च परस्याप उत्तरपदस्य ईप् स्यात् । [२]द्वीपम्, अन्तरीपम्, नीपम्, समीपम् ।

१ नाम्नि पूर्वोत्तरपदे लुग् वा स्त । यथा देवदत्त इत्यस्य 'देव इत्युक्ते, दत्त इत्युक्ते वा देवदत्तविषयकः प्रकरणादर्थविशेषस्य बोधो भवति । एवं भर्तृ वा हरिर्वा भर्तृहरिर्वा, सत्या वा भामा वेत्युक्तेऽपि भर्तृहरि-सत्यभामार्थबोध स्यात् ।

२ द्विधा गता आपोऽस्मिन् इति द्वीपम् । एवमन्तरीपम् अल्पमध्यस्थलम् ।

उपसर्गादिति किम् ? स्वापः । अनवर्णेति किम् ? प्रापम्, परापम् ॥ १०९ ॥

अनोर्देशे उप् । ३ । २ । ११० ।

अनोः परस्यापो देशेऽर्थे उप् स्यात् । अनूपो देशः । देश इति किम् ? अन्वीपं वनम् ॥ ११० ॥

खित्यनव्ययाऽरुषो मोऽन्तो ह्रस्वश्च । ३ । २ । १११ ।

स्वरान्तस्यानव्ययस्यारुषश्च खित्प्रत्ययान्ते उत्तरपदे मोऽन्तो यथासम्भवं ह्रस्वादेशश्च स्यात् । शंमन्यः, कालिंमन्या, अरुन्तुदः । खितीति किम् ? ज्ञमानी । अनव्ययस्येति किम् ? दोषामन्यमहः ॥ १११ ॥

सत्याऽगदाऽस्तोः कारे । ३ । २ । ११२ ।

एभ्यः कारे उत्तरपदे मोऽन्तः स्यात् । सत्यङ्कारः, अगदङ्कारः, अस्तुङ्कारः ॥ ११२ ॥

लोकम्पृण-मध्यन्दिनाऽनभ्यासमित्यम् । ३ । २ । ११३ ।

एते कृतपूर्वपदमोऽन्ता निपात्यन्ते । लोकम्पृणः, मध्यन्दिनम्, अनभ्यासमित्यः ॥ ११३ ॥

भ्राष्ट्राग्नेरिन्धे । ३ । २ । ११४ ।

आभ्यामिन्धे उत्तरपदे मोऽन्तः स्यात् । भ्राष्ट्रमिन्धः, अग्निमिन्धः ॥ ११४ ॥

अगिलाद् गिल-गिलगिलयोः । ३ । २ । ११५ ।

गिलान्तवर्जात् पूर्वपदात् परे गिले गिलगिले चोत्तरपदे मोऽन्तः स्यात् । तिमिङ्गिलः, तिमिङ्गिलगिलः । अगिलादिति किम् ? तिमिङ्गिलगिलः ॥ ११५ ॥

भद्रोष्णात् करणे । ३ । २ । ११६ ।

आभ्यां परः करणे उत्तरपदे मोऽन्तः स्यात् । भद्रंकरणम्, उष्णंकरणम् ॥ ११६ ॥

नवाऽखित् कृदन्ते रात्रे । ३ । २ । ११७ ।

खिद्वर्जे कृदन्ते उत्तरपदे परे रात्रेर्मोऽन्तो वा स्यात् । रात्रिंचरः, रात्रिचरः । खिद्वर्जनमिति किम् ? रात्रिमन्यमहः । कृदन्त इति किम् ? रात्रिसुखम् । अन्तग्रहणं किम् ? रात्र्ययिता ॥ ११७ ॥

धेनोर्भव्यायाम् । ३ । २ । ११८ ।

धेनोर्भव्यायामुत्तरपदे मोऽन्तो वा स्यात् । धेनुम्भव्या, धेनुभव्या ॥ ११८ ॥

अषष्ठीतृतीयादन्याद् दोऽर्थे । ३ । २ । ११९ ।

अषष्ठ्यन्ताद् अतृतीयान्ताचान्यादर्थे उत्तरपदे द् अन्तो वा स्यात् । अन्यदर्थः, अन्यार्थः । षष्ठ्यादिवर्जनं किम् ? अन्यस्यान्येन वाऽर्थोऽन्यार्थः ॥ ११९ ॥

आशाराशाऽऽस्थिताऽऽस्थोत्सुकोति-रागे ।३।२।१२०।

एषूत्तरपदेषु अषष्ठीतृतीयादन्याद् द् अन्तः स्यात् । अन्यदाशीः, अन्यदाशा, अन्यदास्थितः, अन्यदास्था, अन्यदुत्सुकः, अन्यदूतिः, अन्यद्रागः । अषष्ठीतृतीयादित्येव ? अन्यस्य अन्येन वा आशीः अन्याशीः ॥ १२० ॥

ईयकारके । ३ । २ । १२१ ।

अन्याद् ईये प्रत्यये कारके चोत्तरपदे दोऽन्तः स्यात् । अन्यदीयः, अन्यत्कारकः ॥ १२१ ॥

सर्वादि-विश्वग्-देवाद् डद्रिः क्यञ्चौ । ३ । २ । १२२।

सर्वादेर्विष्वग्देवाभ्यां च परतः क्विबन्ते अञ्चावुत्तरपदे डद्रिरन्तः स्यात्। सर्वद्रीचः, द्व्यद्र्यङ्, कद्र्यङ्, विष्वद्र्यङ्, देवद्र्यङ् । क्वीति किम् ? विष्वगंचनम् ॥ १२२ ॥

सह-समः सध्रि-समि । ३ । २ । १२३ ।

अनयोः स्थाने क्विबन्ते अञ्चावुत्तरपदे यथासंख्यं सध्रिसमी स्याताम्। सध्र्यङ्, सम्यङ् । क्वयञ्चावित्येव ? सहाञ्चनम् ॥ १२३ ॥

तिरसस्तिर्यति । ३ । २ । १२४ ।

अकारादौ क्विबन्तेऽञ्चावुत्तरपदे तिरसस्तिरिः स्यात् । तिर्यङ् । अतीति किम् ? तिरश्चः ॥ १२४ ॥

नञ् अत् । ३ । २ । १२५ ।

उत्तरपदे परे नञ् अः स्यात्।अचौरः पन्थाः। उत्तरपद इत्येव ? न भुङ्क्ते ॥ १२५ ॥

त्यादौ क्षेपे । ३ । २ । १२६ ।

त्याद्यन्ते पदे परे निन्दायां गम्यमानायां नञ् अः स्यात् । अपचसि त्वं जाल्म!।क्षेप इति किम् ? न पचति चैत्रः ॥ १२६ ॥

नगोऽप्राणिनि वा । ३ । २ । १२७ ।

अप्राणिन्यर्थे नगो वा निपात्यते । नगः, अगो गिरिः । अप्राणिनीति किम् ? अगोऽयं शीतेन ॥१२७॥

१ सर्वमञ्चतीति सर्वद्र्यङ्, द्वितीयाबहुवचन सर्वद्रीचः, तिर्यङ्वद्रूपाणि स्युः। डिरवादिलोप. । स्त्रीया तु सर्वद्रीची, रूपाणि तु तिर्यग्वत् ।

नखादयः । ३ । २ । १२८ ।

एते अकृताकाराद्यादेशा निपात्यन्ते । नखः, नासत्यः ॥ १२८ ॥

अन् स्वरे । ३ । २ । १२९ ।

स्वरादावुत्तरपदे नञोऽन् स्यात् । अनन्तो जिनः ॥ १२९ ॥

कोः कत्तत्पुरुषे । ३ । २ । १३० ।

स्वरादावुत्तरपदे कोस्तत्पुरुषे कद् स्यात् । कदश्वः । तत्पुरुष इति किम् ? कूष्ट्रो देशः । स्वर इत्येव ? कुब्राह्मणः ॥ १३० ॥

रथ-वदे । ३ । २ । १३१ ।

रथे वदे चोत्तरपदे कोः कद् स्यात् । कद्रथः, कद्वदः ॥ १३१ ॥

तृणे जातौ । ३ । २ । १३२ ।

जातावर्थे तृणे उत्तरपदे कोः कद् स्यात् । कत्तृणा रोहिषाख्या तृणजातिः ॥ १३२ ॥

कत्त्रिः । ३ । २ । १३३ ।

कोः किमो वा त्रावुत्तरपदे कद् स्यात् । कत्त्रयः ॥१३३॥

काऽक्ष-पथोः । ३ । २ । १३४ ।

अनयोरुत्तरपदयोः कोः का स्यात् । काऽक्षः, कापथम् ॥ १३४ ॥

पुरुषे वा । ३ । २ । १३५ ।

पुरुषे उत्तरपदे कोः का वा स्यात् । कापुरुषः,कुपुरुषः॥१३५॥

अल्पे । ३ । २ । १३६।

ईषदर्थस्य कोरुत्तरपदे का स्यात् । कामधुरम्, काऽच्छम् ॥ १३६ ॥

का-कवौ वोष्णे । ३ । २ । १३७ ।

उष्णे उत्तरपदे कोः काकवौ वा स्याताम् । कोष्णम्, कवोष्णम् । पक्षे यथाप्राप्तमिति । तत्पुरुषे, कदुष्णम् । बहुव्रीहौ, कूष्णो देशः ॥ १३७ ॥

कृत्येऽवश्यमो लुक् । ३ । २ । १३८ ।

कृत्यान्ते उत्तरपदेऽवश्यमो लुक् स्यात् । अवश्यकार्यम् । कृत्य इति किम् ? अवश्यं लावकः ॥ १३८ ॥

समः तत-हिते वा । ३ । २ । १३९ ।

तते हिते चोत्तरपदे समो लुग् वा स्यात् । सततम्, सन्ततम् । सहितम्, संहितम् ॥ १३९ ॥

तुमश्च मनः कामे । ३ । २ । १४० ।

तुम्समोर्मनसि कामे चोत्तरपदे लुक् स्यात् । भोक्तुमनाः, गन्तुकामः, समनाः, सकामः ॥ १४० ॥

मांसस्यानङ्-घञि पचि नवा । ३ । २ । १४१ ।

अनङ्घञन्ते पचावुत्तरपदे मांसस्य लुग् वा स्यात् । मांस्पचनम्, मांसपचनम् । मांस्पाकः, मांसपाकः ॥ १४१ ॥

दिक्शब्दात् तीरस्य तारः । ३ । २ । १४२ ।

अस्मात् परस्य तीरस्योत्तरपदस्य तारो वा स्यात् । दक्षिणतारम्, दक्षिणतीरम् ॥ १४२ ॥

सहस्य सोऽन्यार्थे । ३ । २ । १४३ ।

उत्तरपदे परे बहुव्रीहौ सहस्य सो वा स्यात् । सपुत्रः, सहपुत्रः । अन्यार्थ इति किम् ? सहजः ॥ १४३ ॥

नाम्नि । ३ । २ । १४४ ।

उत्तरपदे परे बहुव्रीहौ सहस्य सः संज्ञायां स्यात् । साश्वत्थं वनम् । अन्यार्थ इत्येव ? सहदेवः कुरुः ॥१४४॥

अदृश्याधिके । ३ । २ । १४५ ।

अदृश्यं परोक्षम्, अधिकमधिरूढं तदर्थयोरुत्तरपदयोर्बहुव्रीहौ सहस्य सः स्यात् । साग्निः कपोतः, सद्रोणा खारी ॥ १४५ ॥

अकालेऽव्ययीभावे । ३ । २ १४६ ।

अकालवाचिन्युत्तरपदे सहस्याव्ययीभावे सः स्यात् । सब्रह्म साधूनाम् । अकाल इति किम्? सहपूर्वाह्णं शेते । अव्ययीभाव इति किम् ? सहयुध्वा ॥ १४६ ॥

ग्रन्थाऽन्ते । ३ । २ । १४७ ।

एतद्वाच्युत्तरपदे सहस्याव्ययीभावे सः स्यात् । सकलं ज्योतिषमधीते ॥ १४७ ॥

नाऽऽशिष्यगो-वत्स-हले । ३ । २ । १४८ ।

गवादिवर्जे उत्तरपदे आशिषि गम्यायां सहस्य सो न स्यात् । स्वस्ति गुरवे सहशिष्याय । आशिषीति किम् ? सपुत्रः । गवादिवर्जनं किम् ? स्वस्ति तुभ्यं सगवे, सहगवे । सवत्साय, सहवत्साय । सहलाय, सहहलाय ॥ १४८॥

समानस्य धर्माऽऽदिषु । ३ । २ । १४९ ।

धर्मादावुत्तरपदे समानस्य सः स्यात् । सधर्मा, सनामा ॥१४९।

सब्रह्मचारी । ३ । २ । १५० ।

अयं निपात्यते ॥ १५० ॥

दृक्-दृश-दृक्षे । ३ । २ । १५१ ।

एषूत्तरपदेषु समानस्य सः स्यात् । सदृक्, सदृशः, सदृक्षः ॥ १५१ ॥

अन्य-त्यदादेराः । ३ । २ । १५२ ।

अन्यस्य त्यदादेश्च दृगादावुत्तरपदे आः स्यात् । अन्यादृक्, अन्यादृशः, अन्यादृक्षः । त्यादृक्, त्यादृशः, त्यादृक्षः । अस्मादृक्, अस्मादृशः, अस्मादृक्षः ॥ १५२ ॥

इदम्-किम् ईत्-की । ३ । २ । १५३ ।

दृगादावुत्तरपदे इदम्-किमौ यथासङ्ख्यमीत्कीरूपौ स्याताम् । ईदृक्, ईदृशः, ईदृक्षः । कीदृक्, कीदृशः, कीदृक्षः ॥ १५३ ॥

अनञः क्त्वो यप् । ३ । २ । १५४ ।

नञोऽन्यस्मादव्ययात् पूर्वपदात् परं यदुत्तरपदं तदवयवस्य क्त्वो यप् स्यात् । प्रकृत्य । अनञ इति किम् ? अकृत्वा, परमकृत्वा । उत्तरपदस्येत्येव ? अलंकृत्वा ॥ १५४ ॥

पृषोदरादयः । ३ । २ । १५५ ।

एते साधवः स्युः । पृषोदरः, बलाहकः ॥ १५५ ॥

वा-अवाऽप्योः तनि-क्री-धाग्-नहोर्व-पी । ३ । २ । १५६ ।

अवस्योपसर्गस्य तनिक्रियोरपेश्च धाग्नहोर्यथासङ्ख्यं व-पी वा स्याताम् । वतंसः, अवतंसः । वक्रयः, अवक्रयः । पिहितम्, अपिहितम् । पिनद्धम्, अपिनद्धम् ॥ १५६ ॥

इत्याचार्यश्रीहेमचन्द्रविरचितायां सिद्धहेमचन्द्राभिधानस्वोपज्ञशब्दानुशासनलघुवृत्तौ तृतीयस्याध्यायस्य द्वितीयः पादः समाप्तः ॥ ३ । २ ॥

# ॥ तृतीयः पादः ॥

## ( अथाऽऽख्यातप्रकरणम् )



**वृद्धिराऽऽरैदौत् । ३ । ३ । १ ।**

आ आर् ऐ औ एते प्रत्येकं वृद्धिः स्युः । मार्ष्टि कार्यम्, नायकः, औपगवः ॥ १ ॥

**गुणोऽरेदोत् । ३ । ३ । २ ।**

अर् एत् ओत् एते प्रत्येकं गुणः स्युः । कर्त्ता, चेता, स्तोता ॥ २ ॥

**क्रियाऽर्थो धातुः । ३ । ३ । ३ ।**

कृतिः क्रिया पूर्वापरीभूता, साऽर्थो यस्य स धातुः स्यात् । भवति, अत्ति, गोपायति, जुगुप्सते, पापच्यते[1], पुत्रकाम्यति, मुण्डयति, जवनः ॥ ३ ॥

**न प्रादिरप्रत्ययः । ३ । ३ । ४ ।**

प्रादिर्धातोरवयवो न स्यात्, ततः पर एव धातुरित्यर्थः, न चेत्ततः परः प्रत्ययः । अभ्यमनायत, प्रासादीयत् । प्रादिरिति किम् ? अमहापुत्रीयत् । अप्रत्यय इति किम् ? औत्सुकायत ॥ ४ ॥

**अवौ दा-धौ दा । ३ । ३ । ५ ।**

दाधारूपौ धातू अवितौ[2] दां स्याताम् । दाम्, प्रणि-

---

१ इद यङन्तोदाहरणम् । पुत्रकाम्यतीति नामधातोः, जवन इति कृदन्तस्योदाहरणम्, भ्वादीनां गणानां, णिगन्तादिप्रक्रियान्तानामपि च धातुत्वमस्ति ।

२ 'व्' इत्यनुबन्धवन्तौ धातू वितौ स्त, तौ वर्जयित्वा दासंज्ञौ भवतः ।

दाता । देङ्, प्रणिदयते । डुदांग्, प्रणिददाति । दों प्रणि-
द्यति । ट्धे, प्रणिधयति । डुधांग्, प्रणिदधाति । अवा-
विति किम् ? दांव्, दातं बर्हिः । दैव्, अवदातं मुखम् ॥५॥

वर्तमाना तिव्-तस्-अन्ति, सिव्-थस्-थ, मिव्-
वस्--मस् । ते-आते--अन्ते, से-आथे-ध्वे, ए-वहे-महे
। ३ । ३ । ६ ।

इमानि वचनानि वर्त्तमाना स्युः ॥ ६ ॥

[1]सप्तमी–यात्-याताम्-युस्, यास्-यातम्-यात,
याम्-याव-याम । ईत-ईयाताम्-ईरन्, ईथास्-ईया-
थाम्--ईध्वम्, ईय-ईवहि-ईमहि । ३ । ३ । ७ ।

इमानि वचनानि सप्तमी स्युः ॥ ७ ॥

[4]पञ्चमी–तुव्-ताम्-अन्तु, हि-तम्-त, आनिव्-आवव्-
आमव् । ताम्-आताम्-अन्ताम्, स्व-आथाम्-ध्वम्,
ऐव्--आवहैव्-आमहैव् । ३ । ३ । ८ ।

इमानि वचनानि पञ्चमी स्युः ॥ ८ ॥

---

१ तिवादिषु विलक्षणे "शिदवित्" (है० ४-३-२०) इत्यत्र विशेष-
णार्थम् । "स्मे च वर्तमाना" (५-२-१६) इत्येवमादीनि वर्त्तमानास्थानानि स्युः ।

२ तिवादिप्रत्ययाना वर्तमाना इति सञ्ज्ञाऽत्र क्रियते, एव यादादीनां सप्तमी,
इत्येवमन्यनाऽपि । पाणिनीयसिद्धान्तचन्द्रिकासारस्वतसिद्धान्तरत्नप्रभृतिव्याकरणेषु
तु वर्तमानाया लट्, सप्तम्या लिङ्, पञ्चम्या लोट्, ह्यस्तन्या लङ्, अद्यतन्या लुङ्,
परोक्षाया लिट्, आशिषो लिङ्, श्वस्तन्या लुट्, भविष्यन्त्या लृट्, क्रियातिपत्तेर्लृङ्
इति सञ्ज्ञा वर्तन्ते ।

३ "इच्छार्थे कर्मणः सप्तमी" इति सप्तमीप्रदेशा । विधिसंभावनयोः ।

४ "स्मे पञ्चमी" (५-४-३१) इत्यादयोऽस्याः प्रदेशाः सन्ति ।

[४]ह्यस्तनी-दिव्-ताम्-अन्, सिव्-तम्-त, अम्व्-व-म। त-आताम्-अन्त, थास्-आथाम्-ध्वम्, इ-वहि-महि। ३। ३। ९।

इमानि वचनानि ह्यस्तनी स्युः॥ ९॥

एताः शितः। ३। ३। १०।

एताश्चतस्रः शितो ज्ञेयाः। भवति, भवेत, भवतु, अभवत्।१०।

अद्यतनी–दि-ताम्-अन्, सि-तम्-त, अम्-व-म। त-आताम्-अन्त, थास्-आथाम्-ध्वम्, इ-वहि-महि। ३। ३। ११।

इमानि वचनानि अद्यतनी स्युः॥ ११॥

परोक्षा–णव्-अतुस्-उस्, थव्-अथुस्-अ, णव्-व-म। ए-आते-इरे, से-आथे-ध्वे, ए-वहे-महे। ३। ३। १२।

इमानि वचनानि परोक्षा स्युः॥ १२॥

आशीः–[१]क्यात्-क्यास्ताम्-क्यासुस्, क्यास्-क्यास्तम्-क्यास्त, क्यासम्-क्यास्व-क्यास्म। सीष्ट-सीयास्ताम्-सीरन्, सीष्टास्-सीयास्थाम्-सीध्वम्, सीय-सीवहि–

---

४ अस्याः प्रदेशास्तु "अनद्यतने ह्यस्तनी" (५-२-७) इत्यप्रमादय। एव "अद्यतनी" (५-२-४) इत्यद्यतन्या, "श्रुसदवस्भ्य परोक्षा वा" (५-२-१) इति परोक्षायाः "आशिष्याशी पञ्चम्यौ" (५-४-३८) इत्याशिष, "अनद्यतने श्वस्तनी" (५-३-५) इति श्वस्तन्या, "भविष्यन्ती" (५-३-४) इति भविष्यन्त्याः। क्रियातिपत्तेः "सप्तम्यर्थे क्रियातिपत्तौ क्रियातिपत्तिः" (५-४-९) इत्यादयः प्रदेशा ज्ञेया।

१ अत्र क्त्करण "नामिनो गुणोऽक्ङिति" (४-३-१) इत्यादिषु विशेषणार्थम्। क्त्त्वाद् वृद्धिगुणौ न भवत।

सीमहि । ३ । ३ । १३ ।

इमानि वचनानि आशीः स्युः ॥ १३ ॥

श्वस्तनी–ता-तारौ-तारस्, तासि-तास्थस्-तास्थ, तास्मि-तास्वस्-तास्मस् । ता-तारौ-तारस्, तासे-तासाथे-ताध्वे, ताहे-तास्वहे-तास्महे । ३ । ३ । १४ ।

इमानि वचनानि श्वस्तनी स्युः ॥ १४ ॥

भविष्यन्ती–स्यति-स्यतस्-स्यन्ति, स्यसि-स्यथस्-स्यथ, स्यामि-स्यावस्-स्यामस् । स्यते-स्येते-स्यन्ते, स्यसे-स्येथे-स्यध्वे, स्ये-स्यावहे-स्यामहे । ३ । ३ । १५ ।

इमानि वचनानि भविष्यन्ती स्युः ॥ १५ ॥

क्रियातिपत्तिः–स्यत्-स्याताम्-स्यन्, स्यस्-स्यतम्-स्यत, स्यम्-स्याव-स्याम । स्यत-स्येताम्-स्यन्त, स्यथा स्येथाम्-स्यध्वम्, स्ये-स्यावहि-स्यामहि ।३।३।१६।

इमानि वचनानि क्रियातिपत्तिः स्युः ॥ १६ ॥

त्रीणि त्रीण्यन्य[१]-युष्मदस्मदि । ३ । ३ । १७ ।

१ पाणिनीयादिसञ्ज्ञया प्रथमपुरुषे तच्छब्दवाच्ये इत्यर्थः, यथा स गच्छतीत्यादि । अन्यार्थादीनां द्वयोस्त्रयाणां वा यदा युगपत् प्रयोगस्तदा परार्थमपेक्ष्यैव प्रत्ययाः प्रयोक्तव्याः, यथा त्वं च स च पचथ, इत्यत्र सूत्रोक्तक्रमतो युष्मदर्थं परं (पश्चाद्भूतं) अस्ति, अत एव थप्रत्ययः, एवं त्वं चाहं च स च पचाम इत्यादिषु सूत्रोक्तक्रमापेक्षयैव प्रयोगः कार्यः, न तु प्रयोगक्रमतः, अन्यथा— त्वं च स च भवत, इतिप्रयोगो भवेत्, स च दुष्टः । यत्र भवच्छब्दस्त्वमर्थे स्यात्तदाऽन्यार्थकं प्रथमं प्रत्ययत्रिकं प्रयोक्तव्यम्, यथा–भवान् गच्छति पचति भवति वेति । स्त्रियां तु भवती गच्छति इत्यादि ।

सर्वासां विभक्तीनां त्रीणि त्रीणि वचनानि अन्यस्मिन्नर्थे युष्मदर्थेऽस्मदर्थे च वाच्ये यथाक्रमं स्युः। स पचति, तौ पचतः, ते पचन्ति। पचते, पचेते, पचन्ते। त्वं पचसि, युवां पचथः, यूयं पचथ। पचसे, पचेथे, पचध्वे। अहं पचामि, आवां पचावः, वयं पचामः। पचे, पचावहे, पचामहे। एवं सर्वासु द्वययोगे त्रययोगे च पराश्रयमेव वचनम्। स च त्वं च पचथः, स च त्वं च अहं च पचामः॥१७॥

एक-द्वि-बहुषु। ३। ३। १८।

अन्यादिषु यानि त्रीणि त्रीण्युक्तानि तान्येकद्विबहुष्वर्थेषु यथासङ्ख्यं स्युः। स पचति, तौ पचतः, ते पचन्तीत्यादि॥ १८॥

नवाऽऽद्यानि शतृ-क्वसू च परस्मैपदम्। ३। ३। १९।

सर्वविभक्तीनामाद्यानि नव नव वचनानि शतृक्वसू[1] च परस्मैपदानि स्युः। तिव्, तस्, अन्ति। सिव्, थस्, थ। मिव्, वस्, मस्। एवं सर्वासु॥ १९॥

पराणि कानानशौ चाऽऽत्मनेपदम्। ३। ३। २०।

सर्वविभक्तीनां पराणि नव नव वचनानि कानानशौ चाऽऽत्मनेपदानि स्युः। ते, आते, अन्ते। से, आथे, ध्वे। ए, वहे, महे। एवं सर्वासु॥ २०॥

तत् साप्यानाप्यात् कर्मभावे, कृत्य-क्त-खलर्थाश्च। ३। ३। २१।

तत् आत्मनेपदं कृत्यक्तखलर्थाश्च प्रत्ययाः सकर्मकाद्धातोः कर्मणि, अकर्मकादविवक्षितकर्मकाच्च भावे स्युः। क्रियते

१ शतृक्वसू, कानानशौ च कृत्प्रत्ययाः सन्ति।

कटश्चैत्रेण, चक्राणः, क्रियमाणः, भूयते त्वया, भूयमानम्, क्रियते, मृदु पच्यते, कार्यः; कर्त्तव्यः; करणीयः; देयः; कृत्यः कटस्त्वया, शयितव्यम्, शयनीयम्, शेयम्, कार्यम्, कर्त्तव्यम्, करणीयम्, देयम्, कृत्यम्, त्वया कृतः कटः, शयितम्, कृतं त्वया, सुकरः कटस्त्वया, सुशयं, सुकरं त्वया, सुकटंकराणि वीरणानि, ईषदाढ्यम्भवं भवता, सुग्लानं तत्त्वं मुनिना, सुग्लानं दीनेन, मास आस्यते, मासमास्यते ॥ २१ ॥

इङितः कर्त्तरि । ३ । ३ । २२ ।

इदितो ङितश्च धातोः कर्त्तर्यात्मनेपदं स्यात् । एधते, एधमानः, शेते, शयानः ॥ २२ ॥

क्रियाव्यतिहारेऽगति-हिंसा-शब्दार्थ-हसो हृ-वहश्चाऽनन्योऽन्यार्थे । ३ । ३ । २३ ।

अन्यचिकीर्षितायाः क्रियाया अन्येन हरणं करणं क्रियाव्यतिहारः । तदर्थाद् गतिहिंसाशब्दार्थहस्वर्जाद् धातोर्हृवहिभ्यां च कर्त्तर्यात्मनेपदं स्यात् । न त्वन्योऽन्येतरेतर-परस्परशब्दयोगे । व्यतिलुनते, व्यतिहरन्ते, व्यतिवहन्ते भारम् । क्रियेति किम् ? द्रव्यव्यतिहारे मा भूत्, चैत्रस्य धान्यं व्यतिलुनन्ति । गत्यर्थादिवर्जनं किम् ? व्यतिसर्प्पन्ति, व्यतिहिंसन्ति, व्यतिजल्पन्ति, व्यतिहसन्ति । अनन्योऽन्यार्थ इति किम् ? परस्परस्य व्यतिलुनन्ति । कर्त्तरीत्येव ? तेन भावकर्मणोः पूर्वेणैव गत्यर्थादिभ्योऽपि स्यात्, व्यतिगम्यन्ते ग्रामाः ॥ २३ ॥

१ एधते इति इदित एधिधातोः, शेते इति ङकारेतः शीङ्धातोरुदाहरणम् ।

निविशः । ३ । ३ । २४ ।

नेर्विशः कर्त्तर्यात्मनेपदं स्यात । निविशते ॥ २४ ॥

उपसर्गाद् अस्योहो वा । ३ । ३ । २५ ।

उपसर्गात् पराभ्यामस्यत्यूहिभ्यां कर्त्तर्यात्मनेपदं वा स्यात् । विपर्यस्यते, विपर्यस्यति । समूहते, समूहति ॥२५॥

उत्-स्वराद् युजेरयज्ञतत्पात्रे । ३ । ३ । २६ ।

उदः स्वरान्ताच्चोपसर्गात् पराद् युनक्तेः कर्त्तर्यात्मनेपदं स्यात्, न चेद् यज्ञे यत्तत्पात्रं तद्विषयो युज्यर्थः स्यात् । उद्युङ्क्ते, उपयुङ्क्ते । उत्स्वरादिति किम् ? संयुनक्ति । अयज्ञतत्पात्र इति किम् ? द्वन्द्वं, यज्ञपात्राणि प्रयुनक्ति ॥ २६ ॥

परि-व्यवात् क्रियः । ३ । ३ । २७ ।

एभ्य उपसर्गेभ्यः परात् क्रीणातेः कर्त्तर्यात्मनेपदं स्यात् । परिक्रीणीते, विक्रीणीते, अवक्रीणीते । उपसर्गादित्येव ? उपरिक्रीणाति ॥ २७ ॥

परा–वेर्जेः । ३ । ३ । २८ ।

आभ्यां पराद् जयतेः कर्त्तर्यात्मनेपदं स्यात् । पराजयते, विजयते । उपसर्गाभ्यामित्येव ? बहुवि[1] जयति, वनम् ॥ २८ ॥

समः क्ष्णोः । ३ । ३ । २९ ।

समः परात् क्ष्णौतेः कर्त्तर्यात्मनेपदं स्यात् । संक्ष्णुते शस्त्रम् । सम इति किम् ? क्ष्णौति । उपसर्गादित्येव ? आयसं क्ष्णौति ॥ २९ ॥

---

१ बहवो वय–पक्षिणो यत्र तद् बहुवि वनम् ।

अपस्किरः । ३ । ३ । ३० ।

अपात् किरतेः संस्सट्कात् कर्त्तर्यात्मनेपदं स्यात् । अपस्किरते वृषभो हृष्टः । सस्सट्निर्देशः किम् ? अप किरति । अपेति किम् ? उपस्किरति ॥ ३० ॥

उदश्चरः साऽऽप्यात् । ३ । ३ । ३१ ।

उत्पूर्वाच्चरेः सकर्म्मकात् कर्त्तर्यात्मनेपदं स्यात् । मार्गमुच्चरते । साऽऽप्यादिति किम् ? धूम उच्चरति ॥ ३१ ॥

समस्तृतीयया । ३ । ३ । ३२ ।

सम्पूर्वाच्चरेस्तृतीयान्तेन योगे कर्त्तर्यात्मनेपदं स्यात् । अश्वेन सञ्चरते । तृतीययेति किम् ? उभौ लोकौ सञ्चरसि ॥ ३२ ॥

क्रीडोऽकूजने । ३ । ३ । ३३ ।

कूजनमव्यक्तः शब्दः । ततोऽन्यार्थात् सपूर्वात् क्रीडतेः कर्त्तर्यात्मनेपदं स्यात् । संक्रीडते । सम इत्येव ? क्रीडति । अकूजन इति किम् ? संक्रीडन्त्यनांसि ॥ ३३ ॥

अन्वाङ्–परेः । ३ । ३ । ३४ ।

एभ्यः परात् क्रीडतेः कर्त्तर्यात्मनेपदं स्यात् । अनुक्रीडते, आक्रीडते, परिक्रीडते ॥ ३४ ॥

शप उपलम्भने । ३ । ३ । ३५ ।

उपलम्भनं प्रकाशनं शपथो वा । तदर्थाच्छपतेः कर्त्तर्यात्मनेपदं स्यात् । मैत्राय शपते । उपलम्भन इति किम् ? मैत्रं शपति ॥ ३५ ॥

---

१ अपात् चतुष्पात्पक्षि........." (है० ४-४-९५) सूत्रात् सट्प्रत्ययः; तत्सहितात् किरतेरात्मनेपदं स्यात् ।

## आशिषि [1]नाथः । ३ । ३ । ३६ ।

आशीरर्थादेव नाथेः कर्त्तर्यात्मनेपदं स्यात् । सर्पिषो नाथते । आशिषीति किम् ? मधु नाथति ॥ ३६ ॥

## [2]भुनजोऽत्राणे । ३ । ३ । ३७ ।

पालनादन्यार्थाद् भुनक्तेः कर्त्तर्यात्मनेपदं स्यात् । ओदनं भुङ्क्ते । भुनज इति किम् ? औष्ठौ निर्भुजति । अत्राण इति किम् ? पृथ्वीं भुनक्ति ॥ ३७ ॥

## हृगो गतताच्छील्ये । ३ । ३ । ३८ ।

गतं सादृश्यं । हृगो गतताच्छील्यार्थात् कर्त्तर्यात्मनेपदं स्यात् । पैत्रकमश्वा अनुहरन्ते, पितुरनुहरन्ते । गत इति किम् ? पितुर्हरति चोरयतीत्यर्थः । ताच्छील्यादिति किम् ? नटो राममनुहरति ॥ ३८ ॥

## [3]पूजाऽऽचार्यक-भृत्युत्क्षेप-ज्ञान-विगणन-व्यये नियः । ३ । ३ । ३९ ।

पूजादिषु गम्येषु नियः कर्त्तर्यात्मनेपदं स्यात् । नयते विद्वान् स्याद्वादे, माणवकमुपनयते, कर्मकरानुपनयते, शिशुमुदानयते, नयते तत्त्वार्थे, मद्राः कारं विनयन्ते, शतं

१ नाथृङ् धातुरुपतापैश्वर्याऽऽशीर्याचनार्थेषु वर्तते तत्राऽऽशिष्येवार्थे आत्मनेपद भवति । 'सर्पिषो नाथते' सर्पिर्मे भूयादित्याशास्ते इत्यर्थः ।

२ 'भुजोंत्' कौटिल्ये ( हैमधातुपाठ ) इत्यस्य रूपम् ।

३ पूजा—सन्मानः । 'नयते तविद्वान् स्याद्वादे' ' पण्डितः स्याद्वादे जीवादीन् पदार्थान् युक्तिभिर्निश्चित्य शिष्यबुद्धिं प्रापयति, ते च बोधिताः सन्तो भुवि पूजिता भवन्तीत्यस्य तात्पर्यम् । आचार्यस्य भावः कर्मवाऽऽचार्यकम् । भृतिर्वेतनम् । विगणनमृणादे. शोधनम् । व्ययो धर्मादिषु विनियोग ।

चिनयते । एष्विति किम् ? अजां नयति ग्रामम् ॥ ३९ ॥

कर्तृस्थामूर्त्ताऽऽप्यात् । ३ । ३ । ४० ।

कर्तृस्थममूर्तं कर्म्म यस्य, तस्मान्नियः कर्त्तर्यात्मनेपदं स्यात् । श्रमं विनयते । कर्तृस्थेति किम् ? चैत्रो मैत्रस्य मन्युं विनयति । अमूर्त्तेति किम् ? गडुं विनयति । आप्येति किम् ? बुद्ध्या विनयति ॥ ४० ॥

शदेः शिति । ३ । ३ । ४१ ।

शिद्विषयात् शदेः कर्त्तर्यात्मनेपदं स्यात् । शीयते । शितीति किम् ? शत्स्यति ॥ ४१ ॥

म्रियतेरद्यतन्याशिषि च ३ । ३ । ४२ ।

अतोऽद्यतन्याशीर्विषयाच्छिद्विषयाच्च कर्त्तर्यात्मनेपदं स्यात् । अमृत, मृषीष्ट, म्रियते । अद्यतन्याशिषि चेति किम् ? ममार ॥ ४२ ॥

क्यङ्षो नवा । ३ । ३ । ४३ ।

क्यङ्षन्तात् कर्त्तर्यात्मनेपदं वा स्यात् । निद्रायति, निद्रायते ॥ ४३ ॥

द्युद्भ्योऽद्यतन्याम् । ३ । ३ । ४४ ।

द्युतादिभ्योऽद्यतनीविषये कर्त्तर्यात्मनेपदं वा स्यात् । व्यद्युतत्, व्यद्योतिष्ट । अरुचत्, अरोचिष्ट । अद्यतन्यामिति किम् ? द्योतते ॥ ४४ ॥

वृद्भ्यः स्य-सनोः । ३ । ३ । ४५ ।

वृतादेः पञ्चतः स्यादौ प्रत्यये सनि च विषये कर्त्तर्या-

१ वर्तमानादयश्चतस्रो विभक्त शित्, तद्विषयात् "श्रौति-कृवु........." (४-२-१०८) सूत्रेण शदेः शीयाऽऽदेशः ।

२ बहुवचनं गणार्थम् । वृतङ्, स्यन्दौङ्, वृधङ्, शृधूङ्, कृपौङ् इत्येते पञ्च वृतादयः सन्ति ।

त्मनेपदं वा स्यात् । वर्त्स्यति, वर्त्तिष्यते । विवृत्सति, विवर्त्तिषते । स्यसनोरिति किम् ? वर्त्तते ॥ ४५ ॥

क्लृपः श्वस्तन्याम् । ३ । ३ । ४६ ।

क्लृपः श्वस्तनीविषये कर्त्तर्यात्मनेपदं वा स्यात् । कल्प्तासि, कल्पितासे ॥ ४६ ॥

क्रमोऽनुपसर्गात् । ३ । ३ । ४७ ।

अविद्यमानोपसर्गात् क्रमतेः कर्त्तर्यात्मनेपदं वा स्यात् । क्रमते, क्रामति । अनुपसर्गादिति किम् ? अनुक्रामति ॥ ४७ ॥

वृत्ति-सर्ग-तायने । ३ । ३ । ४८ ।

वृत्तिरप्रतिबन्धः । सर्ग उत्साहः । तायनं स्फीतता । एतद्वृत्तेः क्रमेः कर्त्तर्यात्मनेपदं स्यात् । शास्त्रेऽस्य क्रमते बुद्धिः, सूत्राय क्रमते, क्रमन्तेऽस्मिन् योगाः ॥ ४८ ॥

परोपात् । ३ । ३ । ४९ ।

आभ्यामेव परात् क्रमेर्वृत्त्याद्यर्थात् कर्त्तर्यात्मनेपदं स्यात् । पराक्रमते, उपक्रमते । परोपादिति किम् ? अनुक्रामति वृत्त्यादावित्येव ? पराक्रामति ॥ ४९ ॥

वेः स्वार्थे । ३ । ३ । ५० ।

स्वार्थः पादविक्षेपः । तदर्थाद् विपूर्वात् क्रमेः कर्त्तर्यात्मनेपदं स्यात् । साधु विक्रमते गजः । स्वार्थ इति किम् ? गजेन विक्रामति ॥ ५० ॥

प्रोपाद् आरम्भे । ३ । ३ । ५१ ।

आरम्भार्थात् प्रोपाभ्यां परात् क्रमेः कर्त्तर्यात्मनेपदं स्यात् । प्रक्रमते, उपक्रमते भोक्तुम्, आरम्भ इति किम् ? प्रक्रामति, यातीत्यर्थः ॥ ५१ ॥

आङो ज्योतिरुद्गमे । ३ । ३ ५२ ।

आङः परात् क्रमेश्चन्द्राद्युद्गमार्थात् कर्त्तर्यात्मनेपदं स्यात्। आक्रमते चन्द्रः सूर्यो वा। ज्योतिरुद्गम इति किम् ? आक्रामति वटुः कुतुपम्, धूम आक्रामति ॥५२॥

दागोऽस्वाऽऽस्यप्रसार-विकाशे । ३ । ३ । ५३ ।

स्वाऽऽस्यप्रसारविकाशाभ्यामन्यार्थाद् आङ्पूर्वाद् दागः कर्त्तर्यात्मनेपदं स्यात् । विद्यामादत्ते । स्वास्यादिवर्जनं किम् ? उष्ट्रो मुखं व्याददाति, कूलं व्याददाति ॥ ५३ ॥

नु-प्रच्छः । ३ । ३ । ५४ ।

आङ्पूर्वाद्नौतेः प्रच्छेश्च कर्त्तर्यात्मनेपदं स्यात्। आनुते शृगालः, आपृच्छते गुरुन् ॥ ५४ ॥

गमेः क्षान्तौ । ३ । ३ । ५५ ।

कालहरणार्थाद् गमयतेराङ्पूर्वात् कर्त्तर्यात्मनेपदं स्यात्। आगमयते गुरुम् ? कश्चित् कालं प्रतीक्षते । क्षान्तावि ति किम् ? विद्यामागमयति ॥ ५५ ॥

ह्वः स्पर्द्धे । ३ । ३ । ५६ ।

आङ्पूर्वाद् ह्वयतेः स्पर्द्धे गम्ये कर्त्तर्यात्मनेपदं स्यात् । मल्लो मल्लमाह्वयते । स्पर्द्ध इति किम्? गामाह्वयति ॥ ५६ ॥

सं-नि-वेः । ३ । ३ । ५७ ।

एभ्यो ह्वयतेः कर्त्तर्यात्मनेपदं स्यात् । संह्वयते, निह्वयते, विह्वयते ॥ ५७ ॥

उपात् । ३ । ३ । ५८ ।

उपात् ह्वयतेः कर्त्तर्यात्मनेपदं स्यात्। उपह्वयते॥५८॥

यमः स्वीकारे । ३ । ३ । ५९ ।

उपाद्यमेः स्वीकारार्थात् कर्त्तर्यात्मनेपदं स्यात् । कन्यामुपयच्छते, उपायंस्त महास्त्राणि । च्विनिर्देश इति किम् ? शाटकानुपयच्छति ॥ ५९ ॥

देवाऽर्चा-मैत्री-सङ्गम-पथिकर्त्तृक-मन्त्रकरणे स्थः । ३ । ३ । ६० ।

[1]एतदर्थादुपपूर्वात् तिष्ठतेः कर्त्तर्यात्मनेपदं स्यात् । देवार्चा, जिनेन्द्रमुपतिष्ठते । मैत्री, रथिकानुपतिष्ठते । सङ्गमः, यमुना गङ्गामुपतिष्ठते । पन्थाः कर्त्ता यस्य तत्र, स्रुघ्नमुपतिष्ठते पन्थाः । मन्त्रः करणं यस्य, ऐन्द्रया गार्हपत्यमुपतिष्ठते ॥ ६० ॥

वा लिप्सायाम् । ३ । ३ । ६१ ।

उपात् स्थो लिप्सायां गम्यमानायां कर्त्तर्यात्मनेपदं स्याद् वा । भिक्षुर्दातृकुलमुपतिष्ठते, उपतिष्ठति वा ॥६१॥

उदोऽनूर्ध्वेहे । ३ । ३ । ६२ ।

अनूर्ध्वा या चेष्टा तदर्थादुत्पूर्वात् स्थः कर्त्तर्यात्मनेपदं स्यात् । मुक्तावुत्तिष्ठते । अनूर्ध्वेति किम् ? आसनादुत्तिष्ठति । ईहेति किम् ? ग्रामात् शतमुत्तिष्ठति ॥ ६२ ॥

सं-वि-प्राऽवात् । ३ । ३ । ६३ ।

एभ्यः परात् स्थः कर्त्तर्यात्मनेपदं स्यात् । संतिष्ठते, वितिष्ठते, प्रतिष्ठते, अवतिष्ठते ॥ ६३ ॥

ज्ञीप्सा-स्थेये । ३ । ३ । ६४ ।

ज्ञीप्सा आत्मप्रकाशनम् । स्थेयः सभ्यः । ज्ञीप्सायां

१ यस्यार्थस्य स पथिकर्तृक इति शेषः, तत्र ।

स्थेयविषयार्थं च वर्त्तमानात् स्थः कर्त्तर्यात्मनेपदं स्यात्। तिष्ठते कन्या छात्रेभ्यः, त्वयि तिष्ठते विवादः ॥ ६४ ॥

प्रतिज्ञायाम् । ३ । ३ । ६५ ।

अभ्युपगमार्थात् स्थः कर्त्तर्यात्मनेपदं स्यात्। नित्यं[1] शब्दमातिष्ठते ॥ ६५ ॥

समो गिरः[2] । ३ । ३ । ६६ ।

संपूर्वाद् गिरः प्रतिज्ञार्थात् कर्त्तर्यात्मनेपदं स्यात् । स्याद्वादं सङ्गिरते ॥ ६६ ॥

[3]अवात् । ३ । ३ । ६७ ।

अवाद्गिरः कर्त्तर्यात्मनेपदं स्यात्। अवगिरते ॥६७॥

निह्नवे ज्ञः । ३ । ३ । ६८ ।

निह्नवोऽपलापः। तद्वृत्तेर्ज्ञः कर्त्तर्यात्मनेपदं स्यात् । शतमपजानीते ॥ ६८ ॥

सं-प्रतेरस्मृतौ । ३ । ३ । ६९ ।

स्मृतेरन्यार्थात् संप्रतिभ्यां पराद् ज्ञः कर्त्तर्यात्मनेपदं स्यात्। शतं संजानीते, प्रतिजानीते। अस्मृताविति किम्? मातुः संजानाति ॥ ६९ ॥

[4]अननोः सनः । ३ । ३ । ७० ।

सन्नन्ताद् ज्ञः कर्त्तर्यात्मनेपदं स्यात्, नत्वनोः परात् ।

---

१ मीमांसकाः शब्दस्य नित्यत्वमेवाभिमन्यन्ते ।

२ गिर इति सूत्रे वचनाद् गृणातेर्नात्मनेपदं स्यात्, किन्तु 'गॄत् निगरणे इत्यस्य। स्याद्वादं संगिरते-प्रतिजानीते इति भाव'।

३ प्रतिज्ञायामिति निवृत्तं वेदितव्यं, पृथक्सूत्रकरणात् ।

४ अनुपूर्वकजिज्ञासधातोर्नात्मनेपदमिति तत्त्वम् ।

धर्म्मं जिज्ञासते। अननोरिति किम्? धर्म्ममनुजिज्ञासति ॥ ७० ॥

श्रुवोऽनाङ्--प्रतेः । ३ । ३ । ७१ ।

सन्नन्तात् शृणोतेः कर्त्तर्यात्मनेपदं स्यात्, न त्वाङ्प्रतिभ्यां परात्। शुश्रूषते गुरून्। अनाङ्प्रतेरिति किम्? आशुश्रूषति, प्रतिशुश्रूषति ॥ ७१ ॥

स्मृ--दृशः । ३ । ३ । ७२ ।

आभ्यां सन्नन्ताभ्यां कर्त्तर्यात्मनेपदं स्यात्। सुस्मूर्षते, दिदृक्षते ॥ ७२ ॥

शको जिज्ञासायाम् । ३ । ३ । ७३ ।

शको ज्ञानानुसंहितार्थात् सन्नन्तात् कर्त्तर्यात्मनेपदं स्यात्। विद्यां शिक्षते। जिज्ञासायामिति किम्? शिक्षति ॥ ७३ ॥

[1]प्राग्वत् । ३ । ३ । ७४ ।

सनः पूर्वो यो धातुस्तस्मादिव सन्नन्तात् कर्त्तर्यात्मनेपदं स्यात्। शिशयिषते, अश्वेन संचिचरिषते ॥ ७४ ॥

आमः कृगः । ३ । ३ । ७५ ।

---

१ यो धातुरनुबन्धोपपदार्थविशेषादिहेतुभिः पूर्वमात्मनेपदी स इच्छार्थके सनि परेऽपि पूर्ववत् तादृगेव आत्मनेपदी भवति। 'शिशयिषते' इत्यनुबन्धोदाहरणं, ङकारानुबन्धत्वात्। द्वितीय उपपदस्योदाहरण, समस्तृतीयया" ( ३-३-३२, ) इति सूत्रेण सपूर्वकचरधातोरात्मनेपदविधानात् आचिचंसते चन्द्र इत्यर्थविशेषोदाहरणम्। एव अनुबन्धादिनिमित्तैर्यो धातुः सन्नन्तात् प्राक् परस्मैपदी स्यात्, सोऽपि सनि परे पूर्ववत् परस्मैपदी तिष्ठति यथा बुभूषति, ददिद्रिषति, विरमेः-विरिरंसति, प्रयहे प्रयियक्षति।

आमः परादनुप्रयुक्तात् कृग आम एव प्राग् यो धातुस्तस्मादिव कर्तर्यात्मनेपदं स्यात् । भवति न भवति चेति विधिनिषेधावतिदिश्येते । ईहाञ्चक्रे, बिभराञ्चकार । कृग इति किम् ? ईक्षाभास ॥ ७५ ॥

गन्धनाऽवक्षेप-सेवा-साहस-प्रतियत्न-प्रकथनोपयोगे ।३।३।७६।

एतदर्थात् कृगः कर्तर्यात्मनेपदं स्यात् । गन्धनं द्रोहेण परदोषोद्घाटनम् । उत्कुरुते । अवक्षेपः कुत्सनम् । दुर्वृत्तानवकुरुते । सेवा, महामात्रानुपकुरुते । साहसमविमृश्य प्रवृत्तिः । परदारान् प्रकुरुते । प्रतियत्नो गुणान्तराऽऽधानम् । एधोदकस्योपस्कुरुते । प्रकथनम् , जनापवादान् प्रकुरुते । उपयोगो धर्मादौ विनियोगः । शतं प्रकुरुते ॥ ७६ ॥

अधेः प्रसहने ।३।३।७७।

अधेः परात् कृगः प्रसहनार्थात् कर्तर्यात्मनेपदं स्यात् । प्रसहनं पराभिभवः परेणापराजयो वा । 'तं ह्यधिचक्रे । प्रसहन इति किम् ? तमधिकरोति ॥ ७७ ॥

दीप्ति-ज्ञान-यत्न-विमति-उपसंभाषा-उपमन्त्रणे वदः ।३।३।७८।

एष्वर्थेषु गम्येषु वदः कर्तर्यात्मनेपदं स्यात् । दीप्तिर्भासनम् , वदते विद्वान् स्याद्वादे । ज्ञाने, वदते धीमांस्त्वार्थे । यत्ने, तपसि वदते । नानामतिर्विमतिः । धर्मे

१ तमभिभूतवान् इत्यर्थः, तेन परेण नाऽभिभूतो वा । अथवा सहनमुपेक्षा । तत्र यथा-'मघाऽशा छेदधिकुर्वते रतिम्' इति किरातार्जुनीये १-४३ ।

विवदन्ते । उपसंभाषा उपसान्त्वनम् । कर्म्मकरानुपवदते । उपमन्त्रणं रहस्युपच्छन्दनम् । कुलभार्यामुपवदते ॥७८॥

व्यक्तवाचां सहोक्तौ । ३ । ३ । ७९ ।

व्यक्तवाचो रूढ्या मनुष्यादयस्तेषां संभूयोच्चारणार्थाद् वदः कर्त्तर्यात्मनेपदं स्यात् । संप्रवदन्ते ग्राम्याः । व्यक्तवाचामिति किम् ? संप्रवदन्ति शुकाः । सहोक्ताविति किम् ? चैत्रेणोक्ते मैत्रो वदति ॥ ७९ ॥

विवादे वा । ३ । ३ । ८० ।

विरुद्धार्थो वादो विवादः । व्यक्तवाचां विवादरूपसहोक्त्यर्थाद् वदः कर्त्तर्यात्मनेपदं वा स्यात् । विप्रवदन्ते विप्रवदन्ति वा मौहूर्त्ताः । विवाद इति किम् ? संप्रवदन्ते वैयाकरणाः । सहोक्तावित्येव ? मौहूर्त्तो मौहूर्त्तेन क्रमाद् विप्रवदति ॥ ८० ॥

अनोः कर्म्मण्यसति । ३ । ३ । ८१ ।

व्यक्तवाचामर्थे वर्त्तमानादनुपूर्वाद् वदः कर्म्मण्यसति आत्मनेपदं स्यात् । अनुवदते चैत्रो मैत्रस्य । कर्मण्यसतीति किम् ? उक्तमनुवदति । व्यक्तवाचामित्येव ? अनुवदति वीणा ॥ ८१ ॥

ज्ञः । ३ । ३ । ८२ ।

जानातेः कर्म्मण्यसति कर्त्तर्यात्मनेपदं स्यात् । सर्पिः-

---

१ उपालम्भो वेतिबृहद्वृत्तौ ।

२ जानातेः सकर्मकत्वेऽपि नात्र सर्पिषः कर्मत्वेन विवक्षितं, किन्तु प्रवृत्तौ करणत्वेन, तेन 'सर्पिषो जानीते' इत्यस्य सर्पिषा करणेन भोक्तुं प्रवर्तते इत्यर्थे "अज्ञाने ज्ञः षष्ठी" (२-२-८०,पृ० ८०) इति षष्ठी विभक्तिः ।

पो जानीते । कर्म्मण्यसतीत्येव ? तैलं सर्पिषो जानाति ॥ ८२ ॥

उपात् स्थः । ३ । ३ । ८३ ।

अतः कर्म्मण्यसति कर्त्तर्यात्मनेपदं स्यात् । योगे योग उपतिष्ठते । कर्मण्यसतीत्येव ? राजानमुपतिष्ठति ॥८३ ।

समो गम्-ऋच्छि-प्रच्छि-श्रु-विद्-स्वरति-अर्त्ति-दृशः ।
३ । ३ । ८४ ।

संपूर्वेभ्य एभ्यः कर्म्मण्यसति कर्त्तर्यात्मनेपदं स्यात् । सङ्गच्छते, समृच्छिष्यते, संपृच्छते, संशृणुते, संवित्ते, संस्वरते, संऋच्छते, समियृते, संपश्यते । कर्मण्यसतीत्येव ? सङ्गच्छति मैत्रम् ॥ ८४ ॥

वेः कृगः शब्दे चाऽनाशे । ३ । ३ । ८५ ।

अनाशार्थाद् विपूर्वात् कृगः कर्म्मण्यसति, शब्दे च कर्मणि कर्त्तर्यात्मनेपदं स्यात् । विकुर्वते सैन्धवाः, क्रोष्टा विकुरुते स्वरान् । शब्दे चेति किम् ? विकरोति मृदम् । अनाश इति किम् ? विकरोत्यध्यायम् ॥ ८५ ॥

आङो यम-हनः, स्वेऽङ्गे च । ३ । ३ । ८६ ।

आङः पराभ्यां यम्हनभ्यां कर्मण्यसति कर्तुः, स्वेऽङ्गे च कर्मणि कर्त्तर्यात्मनेपदं स्यात्, आयच्छते, आहते वा ।

१ ' अर्त्तीति सामान्यनिर्देशाद् भ्वादिह्वादिश्च ( ऋधातुः ) गृह्यते " इति बृहद्वृत्तौ स्पष्टीकरणमस्ति ' समृच्छिष्यते ' इति तौदादिकस्य ऋच्छन् धातो रूपं, भ्वादिकस्य तु ऋधातोः ' श्रौति कृवु " ( ४-२-१०८ ) इति सूत्रेण ऋच्छादेशः ।

स्वेऽङ्गे, आयच्छते, आहते वा पादम् । स्वेऽङ्गे चेति किम् ? आयच्छति रज्जुम् ॥ ८६ ॥

व्युदस्तपः । ३ । ३ । ८७ ।

आभ्यां परात् तपेः कर्म्मण्यसति, स्वेऽङ्गे च कर्म्मणि कर्त्तर्यात्मनेपदं स्यात् । वितपते, उत्तपते रविः, वितपते । उत्तपते पाणिम् ॥ ८७ ॥

अणिक्कर्मणिक्कर्तृकाद् णिगोऽस्मृतौ । ३ । ३ । ८८ ।

अणिगवस्थायां यत्कर्म तदेव णिगवस्थायां कर्त्ता यस्य तस्माद् णिगन्तादस्मृत्यर्थात् कर्त्तर्यात्मनेपदं स्यात् । आरोहयते हस्ती हस्तिपकान् । अणिगिति किम् ? आरोहयति हस्तिपकान् महामात्रः, आरोहयन्ति महामात्रेण हस्तिपकाः । णित् किम् ? गणयते गणो गोपालकम् । कर्मेति किम् ? दर्शयति प्रदीपो भृत्यान् । णिगिति किम् ? लुनाति केदारं चैत्रः, लूयते केदारः स्वयमेव, तं प्रयुङ्क्ते लावयति केदारं चैत्रः । कर्त्तेति किम् ? आरोहन्ति हस्तिनं हस्तिपकाः । तानेनमारोहयति महामात्रः । णिग इति किम् ? आरोहन्ति हस्तिनं हस्तिपकाः । तानारोहयते हस्तीत्यणिगि मा भूत् । अस्मृताविति किम् ? स्मरयति वनगुल्मः कोकिलम् ॥ ८८ ॥

प्रलम्भे गृधि-वञ्चेः । ३ । ३ । ८९ ।

आभ्यां णिगन्ताभ्यां प्रलम्भनार्थाभ्यां कर्त्तर्यात्मनेपदं स्यात् । बटुं गर्द्धयते, वञ्चयते वा । प्रलम्भ इति किम् ? श्वानं गर्द्धयति ॥ ८९ ॥

## लीङ्-लिनोऽर्चाऽभिभवे चाऽऽत् चाकर्त्तर्य्यपि

। ३ । ३ । ९० ।

आभ्यां णिगन्ताभ्यामर्चाऽभिभवप्रलम्भार्थाभ्यां कर्त्तर्यात्मनेपदं स्याद्, आत् चानयोरकर्त्तर्यपि । अर्चा, जटाभिरालापयते । अभिभवः, श्येनो वर्त्तिकामपलापयते । प्रलम्भः, कस्त्वामुल्लापयते ?, अकर्त्तर्यपीति किम् ? जटाभिरालाप्यते जटिलेन ॥ ९० ॥

## स्मिङः प्रयोक्तुः स्वार्थे । ३ । ३ । ९१ ।

प्रयोक्तृतो यः स्वार्थः स्मयस्तदर्थात् णिगन्तात् स्मिङः कर्त्तर्यात्मनेपदं स्याद्, आचास्याकर्त्तर्यपि । जटिलो विस्मापयते ।प्रयोक्तुः स्वार्थ इति किम्? रूपेण विस्मापयति। अकर्त्तर्यपीत्येव ? विस्मापनम् ॥ ९१ ॥

## विभेतेर्भीष् च । ३ । ३ । ९२ ।

प्रयोक्तृतः स्वार्थवृत्तेर्णयन्ताद् भियः कर्त्तर्यात्मनेपदं स्याद्, अस्य च भीष्, पक्षे आचाकर्त्तर्यपि । मुण्डो भीषयते, भापयते वा । प्रयोक्तुः स्वार्थ इत्येव ? कुञ्चिकया भाययति । अकर्त्तर्यपीत्येव ? भीषा, भापनम् ॥ ९२ ॥

## मिथ्याकृगोऽभ्यासे । ३ । ३ । ९३ ।

मिथ्यायुक्तात् कृगो ण्यन्तात् क्रियाभ्यासवृत्त्यर्थात् कर्त्तर्यात्मनेपदं स्यात् । पदं मिथ्या कारयते । मिथ्येति किम् ? पदं साधु कारयति । अभ्यास इति किम् ? सकृत् पदं मिथ्या कारयति । ९३ ।

१ लीयति लिनात्योरिवर्णस्याऽऽत्वं स्यात् । सानुबन्धग्रहणात् यौजादिकधातुप्रतिषेधः । अर्चा पूजा । प्रलम्भो वञ्चनम् ।

२ पदं स्वरादिदोषयुतं पुनः पुनः पाठयतीत्यर्थः । सकृत्-एकवारम् ।

**परिमुहाऽऽयमाऽऽयस-पा-द्धे-वद-वस-दमाऽद-रुच-नृतः फलवति । ३ । ३ । ९४ ।**

प्रधानफलवति कर्तरि एभ्यो विवक्षितेभ्यो णिगन्तेभ्य आत्मनेपदं स्यात् । परिमोहयते चैत्रम्, आयामयते सर्पम्, आयासयते मैत्रम्, पाययते वटुम्, धापयते शिशुम्, वादयते वटुम्, वासयते पान्थम् ,दमयते अश्वम्, आदयते[1] चैत्रेण, रोचयते मैत्रम्, नर्तयते नटम् ॥ ९४ ॥

**ई-गितः । ३ । ३ । ९५ ।**

ईदितो गितश्च धातोः फलवति कर्तर्यात्मनेपदं स्यात् । यजते कुरुते । फलवतीत्येव ? यजन्ति कुर्वन्ति ॥ ९५ ॥

**ज्ञोऽनुपसर्गात् । ३ । ३ । ९६ ।**

अतः फलवति कर्तर्यात्मनेपदं स्यात् । गां जानीते । फलवतीत्येव ? परस्य गां जानाति ॥ ९६ ॥

**वदोऽपात् । ३ । ३ । ९७ ।**

अतः फलवति कर्तर्यात्मनेपदं स्यात् । एकान्तमपवदते । फलवतीत्येव ? अपवदति परं स्वभावात् ॥ ९७ ॥

**समुदाङो यमेरग्रन्थे । ३ । ३ । ९८ ।**

एभ्यः पराद् यमेरग्रन्थविषये फलवत्कर्तर्यात्मनेपदं स्यात् । संयच्छते व्रीहीन्, उद्यच्छते भारम्, आयच्छते भारम् । अग्रन्थ इति किम् ? [2]चिकित्सामुद्यच्छति । फलवतीत्येव ? संयच्छति ॥ ९८ ॥

---

१ अद भक्षणे इत्यस्य णिगन्ते रूपम् । केचिद् ' अद्धातोर्न मन्यन्त आत्मनेपदम् ।

२ वैद्यकग्रन्थे उद्यम करोति । चिकित्साग्रन्थमवबोद्धुमिच्छतीत्यर्थः ।

पदान्तरगम्ये वा । ३ । ३ । ९९ ।

प्रक्रान्तसूत्रपञ्चके यदात्मनेपदमुक्तं तत् पदान्तरगम्ये फलवत्कर्तरि वा स्यात् । स्वं शत्रुं परिमोहयते, परिमोहयति वा । स्वं यज्ञं यजते, यजति वा । स्वां गां जानीते, जानाति वा । स्वं शत्रुमपवदते, अपवदति वा । स्वान् व्रीहीन् संयच्छते, संयच्छति वा ॥ ९९ ॥

शेषात् परस्मै । ३ । ३ । १०० ।

येभ्यो धातुभ्यो येन विशेषेणाऽऽत्मनेपदमुक्तं ततोऽन्यस्मात् कर्तरि परस्मैपदं स्यात् । भवति, अस्ति ॥१००॥

परानोः कृगः । ३ । ३ । १०१ ।

परानुपूर्वात् कृगः कर्तरि परस्मैपदं स्यात् । पराकरोति, अनुकरोति ॥ १०१ ॥

प्रत्यभ्यतेः क्षिपः । ३ । ३ । १०२ ।

एभ्यः परात् क्षिपः कर्तरि परस्मैपदं स्यात् । प्रतिक्षिपति, अभिक्षिपति, अतिक्षिपति ॥ १०२ ॥

प्राद् वहः । ३ । ३ । १०३ ।

अतः कर्तरि परस्मैपदं स्यात् । प्रवहति ॥ १०३ ॥

परेर्मृषश्च । ३ । ३ । १०४ ।

परेः परान्मृषेर्वहेश्च कर्तरि परस्मैपदं स्यात् । परिमृष्यति, परिवहति ॥ १०४ ॥

व्याङ्परे रमः । ३ । ३ । १०५ ।

एभ्यः पराद् रमेः कर्तरि परस्मैपदं स्यात् । विरमति,

---

१ परस्मैपदविधिर्येन न नियामकस्तेन तु यथाप्राप्तमात्मनेपदं वा द्वयं वा भवति । यथा करोति कुरुते, प्रकरोति प्रकुरुते, रमते आरमते, वहति वहते ।

आरमति, परिरमति ॥ १०५ ॥

वोपात् । ३ । ३ । १०६ ।

उपाद् रमेः कर्त्तरि परस्मैपदं वा स्यात् । भार्यामुपरमति, उपरमते वा ॥ १०६ ॥

अणिगि प्राणिकर्तृकानाप्यात् [1]णिगः । ३ । ३ । १०७ ।

अणिगवस्थायां यः प्राणिकर्तृकोऽकर्मकश्च धातुस्तस्मात् णिगन्तात् कर्त्तरि परस्मैपदं स्यात् । आसयति चैत्रम् । अणिगीति किम् ? स्वयमेवारोहयमाणं गजं प्रयुङ्क्ते आरोहयते । अणिगिति गकारः किम् ? चेतयमानं प्रयुङ्क्ते चेतयते । प्राणिकर्तृकादिति किम् ? शोषयते व्रीहीन् आतपः । अनाप्यादिति किम् ? कटं कारयते ॥१०७॥

चल्याहारार्थेङ्-बुध-युध-प्रु-द्रु-स्रु-नश-जनः । ३ । ३ । १०८ ।

चल्याहारार्थेभ्य इङादिभ्यश्च णिगन्तेभ्यः कर्त्तरि परस्मैपदं स्यात् । चलयति, कम्पयति, भोजयति, आशयति चैत्रमन्नम्, सूत्रमध्यापयति शिष्यम्, बोधयति पद्मं रविः, योधयति काष्ठानि, प्रावयति राज्यम्, द्रावयत्ययः, स्रावयति तैलम्, नाशयति पापम्, जनयति पुण्यम् ॥१०८॥

इत्याचार्यश्रीहेमचन्द्रविरचितायां सिद्धहेमचन्द्राभिधानस्वोपज्ञशब्दानुशासनलघुवृत्तौ तृतीयस्याध्यायस्य तृतीयः पादः समाप्तः ॥ ३ । ३ ॥

---

[1] " ईंगितः " ( ३-३-९५ पृ० २६० ) इति सूत्रोक्ताऽऽत्मनेपदस्य बाधकमिदम् ।

# ॥ चतुर्थः पादः ॥



**गुपौ-धूप-विच्छि-पणि-पनेरायः । ३ । ४ । १ ।**

एभ्यो धातुभ्यः स्वार्थे आयः स्यात् । गोपायति, धूपायति, विच्छायति, पणायति, पनायति ॥ १ ॥

**कमेर्णिङ् । ३ । ४ । २ ।**

कमेः स्वार्थे णिङ् स्यात् । कामयते ॥ २ ॥

**ऋतेर्डीयः । ३ । ४ । ३ ।**

ऋतेः स्वार्थे ङीयः स्यात् । ऋतीयते ॥ ३ ॥

**अशवि ते वा । ३ । ४ । ४ ।**

गुपादिभ्योऽशविषये ते आयादयो वा स्युः । गोपायिता, गोप्ता । कामयिता, कमिता । ऋतीयिता, अर्तिता ॥ ४ ॥

**गुप्-तिजो गर्हा-क्षान्तौ सन् । ३ । ४ । ५ ।**

गुपो गर्हायां तिजः क्षान्तौ वर्तमानात् स्वार्थे सन् स्यात् । जुगुप्सते, तितिक्षते । गर्हाक्षान्ताविति किम् ? गोपनम्, तेजनम् ॥ ५ ॥

**कितः संशय-प्रतीकारे । ३ । ४ । ६ ।**

कितः संशयप्रतीकारार्थात् स्वार्थे सन् स्यात् । विचिकित्सति मे मनः, व्याधिं चिकित्सति । संशयप्रती

१ आय-णिङ्-ङीयप्रत्ययाः ।

२ औषधोपचारेण रोगं दूरीकरोतीत्यर्थः । इदं प्रतीकारस्योदाहरणम् । विग्रहविनाशयोः प्रतीकारार्थत्वात्तत्राऽप्यनेनैव सन् भवति । विचिकित्सति सदधि ।

कारार्थ इति किम् ? केतयति ॥ ६ ॥

शान्-दान्-मान्-बधाद्निशानाऽऽर्जव-विचार-वैरूप्ये दीर्घश्चेतः । ३ । ४ । ७ ।

एभ्यो यथासङ्ख्यं निशानाद्यर्थेभ्यः स्वार्थे सन् स्यात्, दीर्घश्चैषां द्वित्वे पूर्वस्येतः । शीशांसति, दीदांसति, मीमांसते, बीभत्सते । अर्थोक्तिः किम् ? अर्थान्तरे मा भूत् ? निशानम्, अवदानम्, मानयति, बाधयति ॥७॥

धातोः कण्ड्वादेर्यक् । ३ । ४ । ८ ।

एभ्यो धातुभ्यः स्वार्थे यक् स्यात् । कण्डूयति, कण्डूयते, महीयते । धातोरिति किम् ? कण्डूः ॥ ८ ॥

व्यञ्जनादेरेकस्वराद् भृशाऽऽभीक्ष्ण्ये यङ् वा । ३ । ४ । ९ ।

गुणक्रियाणामधिश्रयणादीनां क्रियान्तराव्यवधानेन साकल्येन संपत्तिः फलातिरेको वा भृशत्वं । प्रधानक्रियाया विक्लेदादेः क्रियान्तराव्यवधानेनाऽऽवृत्तिराभीक्ष्ण्यं । तद्विशिष्टार्थवृत्तेर्धातोर्व्यञ्जनादेरेकस्वराद् यङ् वा स्यात् । पापच्यते । व्यञ्जनादेरिति किम् ? भृशमीक्षते । एकस्वरादिति किम् ? भृशं चकास्ति । वेति किम् ? लुनीहि लुनीहीत्येवायं लुनातीत्यादि यथा स्यात् ॥ ९ ॥

अटयर्त्ति-सूत्रि-मूत्रि-सूच्यशूर्णोः । ३ । ४ । १० ।

एभ्यो भृशाऽऽभीक्ष्ण्यार्थवृत्तिभ्यो यङ् स्यात् । अटाट्यते, अरार्यते, सोसूत्र्यते, मोमूत्र्यते, सोसूच्यते, अशा-

१ पचनादेः ।

श्यते, प्रोणर्णोनूयते ॥ १० ॥

गत्यर्थात् [1]कुटिले । ३ । ४ । ११ ।

व्यञ्जनादेरेकस्वराद् गत्यर्थात् कुटिले एवार्थे वर्त्तमानाद् धातोर्यङ् स्यात् । चङ्क्रम्यते । कुटिल इति किम् ? भृशं क्रामति ॥ ११ ॥

गॄ-लुप-सद-चर-जप-जभ-दश-दहो गर्ह्ये । ३ । ४ । १२ ।

गर्ह्यार्थेभ्य एव एभ्यो यङ् स्यात् । निजेगिल्यते, लोलुप्यते, सासद्यते, [2]चंञ्चूर्यते, जञ्जप्यते, जञ्जभ्यते, दन्दश्यते, दन्दह्यते । गर्ह्य इति किम् ? साधु जपति, भृशं निगिरति ॥ १२ ॥

न गृणा-शुभ-रुचः । ३ । ४ । १३ ।

एभ्यो यङ् न स्यात् । निन्द्यं गृणाति, भृशं शोभते, भृशं रोचते ॥ १३ ॥

बहुलं लुप् । ३ । ४ । १४ ।

यङो लुप् बहुलं स्यात् । बोभूयते, बोभवीति । बहुलवचनात् क्वचिन्न भवति, लोलूया, पोपूया ॥ १४ ॥

---

१ कुटिलगत्यर्थानामेव धातूनां यङ् प्रत्ययविधानार्थमिदं सूत्रम् । सरलगत्यर्थे तु न यङ्, तत्र तु भृशं पुनः पुनर्वा क्रामति गच्छतीत्येवं प्रयोगः । कुटिलं क्रामतीति चङ्क्रम्यते, चंक्रम्यते । "मु अतोऽनुनासिकस्य ॥ (४-१-५१ ) "तौ मुमोर्व्यञ्जने स्वौ" (१-३-१४ पृ० १८) इति सूत्राभ्यां वाऽनुनासिको भवति ।

२ 'चरफलाम्' (४-१-५३ "जपजभ०" (४-१-५२ इति सूत्राभ्यां चरजपादीनामुरन्तो भवति, 'तिचोपान्त्यातोनोदु" ( ४-१-५४ ) इति सूत्रात् चञ्चूर्यते सिध्यति ।

## अचि । ३ । ४ । १५ ।

यङोऽचि परे लुप् स्यात् । चेच्यः, नेन्यः ॥ १५ ॥

## नोतः । ३ । ४ । १६ ।

उदन्ताद् विहितस्य यङोऽचि परे लुब् न स्यात् । रोरुयः॥१६॥

## चुरादिभ्यो णिच् । ३ । ४ । १७ ।

एभ्यो धातुभ्यः स्वार्थे णिच् स्यात् । चोरयति । पदयते ॥ १७ ॥

## युजादेर्नवा । ३ । ४ । १८ ।

एभ्यः स्वार्थे णिच् वा स्यात् । योजयति, योजति । साहयति, सहति ॥ १८ ॥

## भूङः प्राप्तौ णिङ् । ३ । ४ । १९ ।

भुवः प्राप्त्यर्थात् णिङ् वा स्यात् । भावयते, भवते । प्राप्ताविति किम् ? भवति ॥ १९ ॥

१ णिचो ञित्त्वाऽभावेन "ईङितः" (३-३-१०५) सूत्रेण फलवत्कर्तरि नाऽऽत्मनेपदं भवति । पाणिनीये व्याकरणे तु..."णिचश्च" (पा ३-१-१५) इति सूत्रेणाऽऽत्मनेपदमपि भवति। एवं सारस्वतचन्द्रिका-चान्द्रमतेऽपि भवति "शेषात् परस्मै" (पृ० २२१) इति सूत्रेण परस्मैपदम् । "लघोरुपान्त्यस्य" (४-३-४) सूत्रेण गुणे "एदैतोऽयाय्" (१-२-२३ पृ. १२) इति तिव्प्रत्यये चोरयति सिध्यति । केचित् चुरादेर्विकल्पेन णिचमिच्छन्ति । तन्मते चोरति चिन्ततीति रूपमपि भवति । चोरयेत्, चोरयतु, अचोरयत्, धातोर...(३-४-४६) इति चोरयाञ्चकार, "णेरनिटि" (४-३-८३) इति सूत्रेण णेर्लुग्भवनात् आशिषि चोर्यात्, तादौ चोरयिता, अद्यतन्या "णिश्रि..." (३-४-५८), "आद्योंऽश..." (४-१-२) "उपान्त्यस्यासमान......" (४-२-३५) "लघोर्दीर्घोऽस्वरादेः" (४-१-६४) इति सूत्रैः, अचूचुरत् अचूचुरतां अचूचुरन्निति रूपाणि वेद्यानि । आत्मनेपदिनि, तु अचूचुरत इत्यनया रीत्या रूपाणि ग्राह्याणि । एवं "प्रयोक्तृव्यापारे" ऽपि रूपपद्धतिर्बोद्धव्या । णिचि णकारो वृद्ध्यर्थः । चुरादिराकृतिगणः ।

## [1]प्रयोक्तृव्यापारे णिग् । ३ । ४ । २० ।

कुर्वन्तं यः प्रयुङ्क्ते तद्व्यापारे वाच्ये धातोर्णिग् वा स्यात् । कारयति, भिक्षा वासयति, राजानमागमयति, कंसं घातयति, पुष्येण चन्द्रं योजयति, उज्जयिन्याः प्रस्थितो माहिष्मत्यां सूर्यमुद्गमयति ॥ २० ॥

## तुमर्हाद् इच्छायां सन्. अतत्सनः । ३ । ४ । २१ ।

यो धातुरिषेः कर्म, इषिणैव च समानकर्तृकः स तुमर्हः । तस्मादिच्छायामर्थे सन् वा स्यात्, न त्विच्छासन्नन्तात् । चिकीर्षति, जिगमिषति । तुमर्हादिति किम् ? यानेनेच्छति, भुक्तिमिच्छति मैत्रस्य । इच्छायामिति किम् ? भोक्तुं याति । अतत्सन इति किम् ? चिकीर्षितुमिच्छति । तदिति किम् ? जुगुप्सिषते ॥ २१ ॥

## द्वितीयायाः काम्यः । ३ । ४ । २२ ।

द्वितीयान्तादिच्छायां काम्यो वा स्यात् । इदंकाम्यति । द्वितीयाया इति किम् ? इष्टः पुत्रः ॥ २२ ॥

## अमाव्ययात् क्यन् च । ३ । ४ । २३ ।

मान्ताव्ययाभ्यामन्यस्माद् द्वितीयान्तादिच्छायां

---

१ कुर्वन्तं प्रेरयतीति कारयति एवमन्यत्राऽपि । अत्र प्रक्रियायां सकर्मकधातोर्द्विकर्मकत्वम्, अकर्मकस्य च सकर्मकत्वं भवति । यथा तन्दुलं पचति जिनदत्तः तं प्रेरयतीति पाचयति देवदत्तः । भिक्षुर्वसति, वसन्तं तं प्रेरयतीति वासयति भिक्षा । चुरादेरस्मिन् णिचि परे णिचो लोपः स्यात्, तत्र चोरयन्तं प्रयोक्तृव्यापारेऽपि भवति । ' ननु च कर्ताऽपि करणादीनां प्रयोजक इति तद्व्यापारेऽपि णिग् प्राप्नोति इत्याशङ्क्य बृहद्वृत्ति—तत्स्वातन्त्र्यकर्तृत्वे सत्यपि न प्रयोजकत्वमित्यभिप्रायेण करणव्यापारे णिग् न्यादिष्टं । यदि च व्यापारमात्राच्च णिग् स्यात्तदा सूत्रकारः 'व्यापारे णिग्' इति सूत्रं कुर्यात्, न चैवं कृतमित्यलं चर्चया ॥

क्यन् काम्यश्च वा स्यात्। पुत्रीयति, पुत्रकाम्यति। अमाव्ययादिति किम्? इदमिच्छति, स्वरिच्छति॥ २३॥

**आधाराच्चोपमानाद् आचारे। ३। ४। २४।**

अमाव्ययादुपमानाद्, द्वितीयान्तादाधाराच्चाऽऽचारार्थे क्यन् वा स्यात्। पुत्रीयति[1] च्छात्रम्, प्रासादीयति कुट्याम्॥ २४॥

**कर्तुः क्विप्, गल्भ-क्लीब-होडात्तु ङित्। ३।४।२५।**

कर्तुरुपमानाद् नाम्न आचाराऽर्थे क्विप् वा स्यात्, गल्भक्लीबहोडेभ्यस्तु स एव ङित्। अश्वति, गल्भते, क्लीबते, होडते॥ २५॥

**क्यङ्। ३। ४। २६।**

कर्तुरुपमानादाचारेऽर्थे क्यङ् वा स्यात्। हंसायते॥ २६॥

**सो वा लुक् च। ३। ४। २७।**

सन्तात् कर्तुरुपमानादाचारेऽर्थे क्यङ् वा स्याद्, अन्तस्य च सो वा लुक्। पयायते, पयस्यते॥ २७॥

**ओजोऽप्सरसः। ३। ४। २८।**

आभ्यां कर्तुरुपमानाभ्यामाचारे क्यङ् वा स्यात्, सश्च लुक्। ओजायते, अप्सरायते॥ २८॥

---

१ पुत्र मिवाचरति पुत्रीयति गुरु च्छात्रम्। प्रासाद इवाचरति तिष्ठतीति प्रासादीयति कुट्या भिक्षु। अत्र नाम्नो निष्पन्नो धातुर्भवति। धातुसंज्ञानन्तर पुत्रीयधातोरितवादिप्रत्ययाः, णिगादिप्रनियाप्रत्ययाश्च यथाप्राप्त भवन्ति। एव सर्वेषा नामधातूनाम्।

च्व्यर्थे भृशादेः स्तोः । ३ । ४ । २९ ।

भृशादेः कर्तुश्च्व्यर्थे क्यङ् वा स्यात्, यथासम्भवं स्तोर्लुक् च । भृशायते, उन्मनायते, वेहायते । कर्तुरित्येव ? अभृशम्भृशं करोति । च्व्यर्थ इति किम्? भृशो भवति ॥२९॥

डाच्-लोहितादिभ्यः षित् । ३ । ४ । ३० ।

डाजन्तेभ्यो लोहितादिभ्यश्च कर्तृभ्यश्च्व्यर्थे क्यङ् [1]षित् स्यात् । पटपटायति, पटपटायते । लोहितायति, लोहितायते । कर्तुरित्येव ? अपटपटा पटपटा करोति । च्व्यर्थ इत्येव ? लोहितो भवति ॥ ३० ॥

कष्ट-कक्ष-कृच्छ्र-सत्र-गहनाय पापे क्रमणे । ३ । ४ । ३१ ।

एभ्यश्चतुर्थ्यन्तेभ्यः पापवृत्तिभ्यः क्रमणेऽर्थे क्यङ् स्यात् । कष्टायते, कक्षायते, कृच्छ्रायते, सत्रायते गहनायते । चतुर्थीति किम् ? रिपुः कष्टं क्रामति । पाप इति किम् ? कष्टाय तपसे क्रामति ॥ ३१ ॥

रोमन्थाद् व्याप्याद् उच्चर्वणे । ३ । ४ । ३२ ।

अभ्यवहृतं द्रव्यं रोमन्थः । उद्गीर्य चर्वणमुच्चर्वणम् । अस्मिन्नर्थे रोमन्थात् कर्मणः क्यङ् वा स्यात् । रोमन्थायते गौः । उच्चर्वण इति किम् ? कीटो रोमन्थं वर्तयति ॥३२॥

फेनोष्म-बाष्प-धूमाद् उद्वमने । ३ ४ । ३३ ।

एभ्यः कर्मभ्य उद्वमनेऽर्थे क्यङ् वा स्यात् । फेनायते,

---

१ क्यङ्रूप प्रत्ययः स्यादित्यर्थः । 'क्यङ्षो नवा (३-२-८३ पृ० १९९) इतिविशेषणार्थं षकारो ज्ञेय । लोहितादिराकृतिगणः ।

ऊष्मायते, बाष्पायते, धूमायते ॥ ३३ ॥

सुखादेरनुभवे । ३ । ४ । ३४ ।

साक्षात्कारेऽर्थे सुखादेः कर्मणः क्यङ् वा स्यात्। सुखायते, दुःखायते ॥ ३४ ॥

शब्दादेः कृतौ वा । ३ । ४ । ३५ ।

एभ्यः कर्मभ्यः कृतावर्थे क्यङ् वा स्यात्। शब्दायते, वैरायते। पक्षे णिच्, शब्दयति, वैरयति ॥ ३५ ॥

तपसः क्यन् । ३ । ४ । ३६ ।

अस्मात् कर्मणः कृतावर्थे क्यन् वा स्यात्। तपस्यति ॥ ३६ ॥

नमो-वरिवस्-चित्रङोऽर्चा-सेवाऽऽश्चर्ये । ३ । ४ । ३७ ।

एभ्यः कर्मभ्यो यथासंख्यमर्चादिष्वर्थेषु क्यन् वा स्यात्। नमस्यति, वरिवस्यति, चित्रीयते ॥ ३७ ॥

अङ्गात् निरसने णिङ् । ३ । ४ । ३८ ।

अङ्गवाचिनः कर्मणो निरसनेऽर्थे णिङ् वा स्यात्। हस्तयते, पादयते ॥ ३८ ॥

पुच्छाद् उत्-परि-व्यसने । ३ । ४ । ३९ ।

पुच्छात् कर्मण उदसने पर्यसने व्यसनेऽसने चार्थे णिङ् वा स्यात्। उत्पुच्छयते, परिपुच्छयते, विपुच्छयते, पुच्छयते ॥ ३९ ॥

भाण्डात् समाचितौ । ३ । ४ । ४० ।

भाण्डात् कर्मणः समाचिनार्थे णिङ् वा स्यात्। सम्भाण्डयते, परिभाण्डयते ॥ ४० ॥

चीवरात् परिधानार्जने । ३ । ४ । ४१ ।

अस्मात् कर्मणः परिधानेऽर्जने चार्थे णिङ् वा स्यात्। परिचीवरयते, संचीवरयते ॥ ४१ ॥

णिज् बहुलं नाम्नः कृगादिषु । ३ । ४ । ४२ ।

कृगादीनां धातूनामर्थे नाम्नो णिज् बहुलं स्यात्। मुण्डं करोति मुण्डयति च्छात्रम्, पटुमाचष्टे पटयति, वृक्षं रोपयति वृक्षयति, कृतं गृह्णाति कृतयति ॥ ४२ ॥

व्रताद् भुजि-तन्निवृत्त्योः । ३ । ४ । ४३ ।

व्रतं शास्त्रविहितो नियमः। व्रताद् भुजर्थात् तन्निवृत्त्यर्थाच्च कृगादिष्वर्थेषु णिज् बहुलं स्यात्। पयो व्रतयति, सावद्यान्नं व्रतयति ॥ ४३ ॥

सत्याऽर्थ-वेदस्य आः । ३ । ४ । ४४ ।

एषां णिज्सन्नियोगे आः स्यात्। सत्यापयति, अर्थापयति, वेदापयति ॥ ४४ ॥

श्वेताश्व-अश्वतर-गालोडिताऽऽह्वरकस्याऽश्व-तर-इत-कलुक् । ३ । ४ । ४५ ।

एषां णिज्योगे यथासङ्ख्यमश्वादेः शब्दस्य लुक् स्यात्। श्वेतयति, अश्वयति, गालोडयति, आह्वरयति ॥ ४५ ॥

धातोरनेकस्वरादाम् परोक्षायाः कृभ्वस्ति चानु-तदन्तम् । ३ । ४ । ४६ ।

कुटिलिकाया अण् । ६ । ४ । २६ ।

अस्मात् टान्ताद् हरति अण् स्यात् । कौटिलिकः कर्मारादिः ॥ २६ ॥

[1]ओजस्-सहोऽम्भसो वर्त्तते । ६ । ४ । २७ ।

एभ्यः टान्तेभ्यो वर्त्तते इत्यर्थे इकण् स्यात् । औजसिक, साहसिकः, आम्भसिकः ॥ २७ ॥

तं प्रत्यनोर्लोमेप-कूलात् । ६ । ४ । २८ ।

तमिति द्वितीयान्तात् प्रति-अनुपूर्वलोमन्-ईपकूलान्ताद् वर्त्तते इत्यर्थे इकण् स्यात् । प्रातिलोमिकः, आनुलोमिकः, प्रातीपिकः, आन्वीपिक, प्रातिकूलिकः, आनुकूलिकः ॥

परेर्मुख-पार्श्वात् । ६ । ४ । २९ ।

परिपूर्वमुखपार्श्वान्ताद् द्वितीयान्ताद् वर्त्तते इत्यर्थे इकण् स्यात् । पारिमुखिकः, पारिपार्श्विकः ॥ २९ ॥

[2]रक्षदुञ्छतोः । ६ । ४ । ३० ।

द्वितीयान्तादनयोरिकण् स्यात् । नागरिकः, बादरिकः ॥ ३० ॥

पक्षि-मत्स्य-मृगार्थाद् घ्नति । ६ । ४ । ३१ ।

पक्ष्याद्यर्थात् द्वितीयान्ताद् घ्नत्यर्थे इकण् स्यात् । पाक्षिकः, मात्स्यिकः, मार्गिकः ॥ ३१ ॥

परिपन्थात् तिष्ठति च । ६ । ४ । ३२ ।

अस्माद् द्वितीयान्तात् तिष्ठति घ्नति, चेकण् स्यात् । पारिपन्थिकश्चौरः ॥ ३२ ॥

---

१ ओजस सहस् अम्भस् इति त्रिभ्य । ओजसा सहसाऽम्भसा वर्त्तते इतिविग्रह ।

२ रक्षति उञ्छति चार्थे । नगरं रक्षतीति नागरिक । बदराण्युञ्छतीति बादरिक ।

परिपथात् । ६ । ४ । ३३ ।

अस्माद् द्वितीयान्तात् तिष्ठत्यर्थे इकण् स्यात् । पारिपथिकः ॥ ३३ ॥

अवृद्धेर्गृह्णति गर्ह्ये । ६ । ४ । ३४ ।

द्वितीयान्ताद् वृद्धिवर्जात् निन्द्ये गृह्णति इकण् स्यात्। द्वैगुणिकः ॥ ३४ ॥

कुसीदाद् इकट् । ६ । ४ । ३५ ।

अस्माद् द्वितीयान्तात् निन्द्ये गृह्णति इकट् स्यात् । कुसीदिकी ॥ ३५ ॥

दशैकादशाद् इकश्च । ६ । ४ । ३६ ।

अस्माद् द्वितीयान्तात् निन्द्ये गृह्णति इक इकट् च स्यात् । दशैकादशिका दशैकादशिकी ॥ ३६ ॥

अर्थ-पद-पदोत्तर-ललाम-प्रतिकण्ठात् ।६।४।३७।

अर्थात्, पदात्, पदशब्द उत्तरपदं यस्य तस्मात्, ललामप्रतिकण्ठाभ्यां च द्वितीयान्ताभ्यां गृह्णति इकण् स्यात् । आर्थिकः, पादिकः, पौर्वपदिकः, लालामिकः, प्रातिकण्ठिकः ॥ ३७ ॥

परदाराऽऽदिभ्यो गच्छति । ६ । ४ । ३८ ।

एभ्यो द्वितीयान्तेभ्यो गच्छत्यर्थे इकण् स्यात् । पारदारिकः, गौरुदारिकः ॥ ३८ ॥

प्रतिपथाद् इकश्च । ६ । ४ । ३९ ।

अस्माद् द्वितीयान्ताद् गच्छतीक इकण् च स्यात् । प्रतिपथिकः, प्रातिपथिकः ॥ ३९ ॥

माथोत्तरपद-पद-व्याक्रन्दाद् धावति ।६।४।४०।

माथ[1] उत्तरपदं यस्य तस्मात्, पदव्याक्रन्दाभ्यां च द्वितीयान्ताभ्यां च धावत्यर्थे इकण् स्यात् । दाण्डमाथिकः, पादविकः, आक्रन्दिकः ॥ ४० ॥

पश्चात्यनुपदात् । ६ । ४ । ४१ ।

पश्चादर्थाद् अनुपदाद् द्वितीयान्तात् धावति इकण् स्यात् । आनुपदिकः ॥ ४१ ॥

सुस्नाताऽऽदिभ्यः पृच्छति । ६ । ४ । ४२ ।

एभ्यो द्वितीयान्तेभ्यः पृच्छत्यर्थे इकण् स्यात् । सौस्नातिकः, सौखरात्रिकः ॥ ४२ ॥

प्रभूताऽऽदिभ्यो ब्रुवति । ६ । ४ । ४३ ।

एभ्यो द्वितीयान्तेभ्यो ब्रुवत्यर्थे इकण् स्यात् । प्राभूतिकः, पार्याप्तिकः ॥ ४३ ॥

माशब्द[2] इत्यादिभ्यः । ६ । ४ । ४४ ।

एभ्यो ब्रुवति इकण् स्यात् । माशब्दिकः, कार्यशब्दिकः ॥ ४४ ॥

शाब्दिक-दार्दरिक-लालाटिक-कौक्कुटिकम् । ६ । ४ । ४५ ।

---

१ माथशब्दो मार्गार्थः । दण्ड इव [illegible] माथो मार्गः, तं धावतीति दाण्डमाथिकः ।

२ अत्र [illegible] । माशब्द इति, कार्यशब्द इति ब्रूते इति माशब्दिकः, कार्यशब्दिकः । माशब्दं कार्यशब्दं वा [illegible] इति [illegible] ।

एते इकणन्ता निपात्यन्ते । शाब्दिको वैयाकरणः, दार्दरिको वादित्रकृत्, लालाटिकः प्रमत्तः सेवाकृत्, कौक्कुटिको भिक्षुः ॥ ४५ ॥

समूहार्थात् समवेते । ६ । ४ । ४६ ।

अस्माद् द्वितीयान्तात् समवेतेऽर्थे इकण् स्यात् । सामूहिकः, सामाजिकः ॥ ४६ ॥

पर्षदो ण्यः । ६ । ४ । ४७ ।

अस्माद् द्वितीयान्तात् समवेते ण्यः स्यात् । पार्षद्यः ॥

सेनाया वा । ६ । ४ । ४८ ।

अस्माद् द्वितीयान्तात् समवेते ण्यो वा स्यात् । सैन्यः, सैनिकः ॥ ४८ ॥

धर्माऽधर्मात् चरति । ६ । ४ । ४९ ।

आभ्यां द्वितीयान्ताभ्यां चरत्यर्थे इकण् स्यात् । धार्मिकः, आधर्मिकः ॥ ४९ ॥

षष्ठ्या धर्म्ये । ६ । ४ । ५० ।

षष्ठ्यन्ताद् धर्मादनपेते इकण् स्यात् । शौल्कशालिकम् ॥ ५० ॥

ऋत्-नराऽऽदेरण् । ६ । ४ । ५१ ।

ऋदन्ताद् नराऽऽदेश्च षष्ठ्यन्ताद् धर्म्येऽण् स्यात् । नारं, नरस्य धर्म्यम् नारं, माहिषम् ॥ ५१ ॥

१ प्रथमं नारमिति ऋदन्तस्योदाहरणम् । नुर्धर्म्यमिति विग्रहः । एवं पितुर्धर्म्यं पैत्रम्, शास्तुः शास्त्रमित्यादि । ऋतो १-२-२१ सूत्रेण रः । णित्वादादेर्वृद्धिः । स्त्रियामुभयत्रापि नारीति । इकण्बाधनार्थं नरशब्दस्य पृथग् ग्रहणं कृतम् । नारं माहिषमिति नरादेरुदाहरणे स्तः ।

विभाजयितृ-विशसितुर्णि-इड्लुक् च । ६ । ४ । ५२ ।

आभ्यां षष्ठ्यन्ताभ्यां धर्म्येऽण् स्यात्, तद्योगे विभाजयितुर्णिल्लुक्, विशसितुरिड्लुक् च । वैभाजित्रम्, वैशस्त्रम् ॥ ५२ ॥

अवक्रये । ६ । ४ । ५३ ।

षष्ठ्यन्तादवक्रयेऽर्थे इकण् स्यात् । आपणिकः ॥ ५३ ॥

तदस्य पण्यम् । ६ । ४ । ५४ ।

तदिति प्रथमान्तात् विभक्त्यर्थाद् अस्येति षष्ठ्यर्थे इकण् स्यात्, तच्चेत् प्रथमान्तं पण्यं चेत् । आपूपिकः ॥ ५४ ॥

किशराऽऽदेरिकट् । ६ । ४ । ५५ ।

एभ्यस्तदस्य पण्यमिति विषये इकट् स्यात् । किशरिकी, नलदिकः ॥ ५५ ॥

शलालुनो वा । ६ । ४ । ५६ ।

अस्मात् तदस्य पण्यमिति विषये इकट् वा स्यात् । शलालुकी, शालालुकी ॥ ५६ ॥

शीलम् । ६ । ४ । ५९ ।

प्रथमान्तात् शीलार्थात् षष्ठ्यर्थे इकण् स्यात् । आपूपिकः ॥ ५९ ॥

अस्थाच्छत्राऽऽदेरञ् । ६ । ४ । ६० ।

अन्तात् स्थः, छत्रादेश्च तदस्य शीलमितिविषयेऽञ् स्यात् । आस्थः, छात्रः, तापसः ॥ ६० ॥[1]

तूष्णीकः । ६ । ४ । ६१ ।

तूष्णीमः तदस्य शीलमितिविषये कः, मलुक् च स्यात् । तूष्णीकः ॥ ६१ ॥

प्रहरणम् । ६ । ४ । ६२ ।

प्रथमान्तात् षष्ठ्यर्थे इकण् स्यात्, तत् प्रहरणं चेत् । आसिकः[2] ॥ ६२ ॥

परश्वधाद् वाऽण् । ६ । ४ । ६३ ।

अस्मात् तदस्य प्रहरणमितिविषयेऽण् वा स्यात् । पारश्वधः, पारश्वधिकः ॥ ६३ ॥

शक्ति-यष्टेः टीकण् । ६ । ४ । ६४ ।

आभ्यां तदस्य प्रहरणमितिविषये टीकण् स्यात् । शाक्तीकी, याष्टीकी ॥ ६४ ॥

वेष्ट्यादिभ्यः । ६ । ४ । ६५ ।

एभ्यस्तदस्य प्रहरणमित्यर्थे टीकण् वा स्यात् । ऐष्टीकी, ऐष्टिकी । ऐषीकः, ऐषिकः ॥ ६५ ॥

---

१ आस्था शीलमस्य आस्थः । "उपसर्गादातः" (५-३-११०) इत्यङ् प्रत्ययः ।

२ असिः प्रहरणमस्य आसिकः । अनया रीत्या पारश्वधशाक्तिकयैष्टिकादीनां विग्रहः ।

### [1]नास्तिकाऽऽस्तिक-दैष्टिकम् । ६ । ४ । ६६ ।

एते तदस्येत्यर्थे इकणन्ता निपात्यन्ते । नास्तिकः, आस्तिकः, दैष्टिकः ॥ ६६ ॥

### वृत्तोऽपपाठोऽनुयोगे । ६ । ४ । ६७ ।

प्रथमान्तात् षष्ठ्यर्थे इकण् स्यात्, तच्चेदनुयोगविषये वृत्तोऽपपाठः । ऐकान्यिकः ॥ ६७ ॥

### बहुस्वरपूर्वाद् इकः । ६ । ४ । ६८ ।

बहुस्वर पूर्वपदं यस्य तस्मात् प्रथमान्तात् षष्ठ्यर्थे इकः स्यात्, तच्चेत् परीक्षायां वृत्तोऽपपाठः । एकादशान्यिकः ॥ ६८ ॥

### भक्ष्यं हितमस्मै । ६ । ४ । ६९ ।

प्रथमान्ताद् अस्मै इति चतुर्थ्यर्थे इकण् स्यात्, तच्चेत् भक्ष्यं हितम् । आपूपिकः ॥ ६९ ॥

### नियुक्तं दीयते । ६ । ४ । ७० ।

प्रथमान्तात् चतुर्थ्यर्थे इकण् स्यात्, तच्चेत् नियुक्तमव्यभिचारेण नित्यं वा दीयते । आग्रभोजनिकः ॥७०॥

### श्राणा-मांसौदनाद् इको वा । ६ । ४ । ७१ ।

आभ्यां तदस्मै नियुक्तं दीयते इतिविषये इकः प्रत्ययो वा स्यात् । श्राणिका, श्राणिकी । मांसौदनिका, मांसौदनिकी ॥ ७१ ॥

---

१ नास्ति परलोक पुण्यपापमोक्षादिर्वेति मतिरस्यासौ नास्तिक । नास्तिको वेदनिन्दक इत्यादिवाक्यानि तु प्रमाणयुक्तिशून्यानि । नास्तिको जैननिन्दक, नास्तिक कुराननिन्दक, नास्तिको बौद्धशास्त्रादिनिन्दक इत्यपि कश्चिद् वदेत्, तथा च समग्र जगत् नास्तिक स्यात्, एवं च मोक्षाभाव प्रभृतकल्पं चोत्पद्येत । अस्तिनास्ती अव्यये स्तः । दिष्टं भाग्यम् ।

भक्तौदनाद्वाऽणिकट् । ६ । ४ । ७२ ।

आभ्यां यथासङ्ख्यमण्-इकटौ वा स्याताम्, तदस्मै नियुक्तं दीयते इतिविषये । भाक्तः, औदनिकी । भाक्तिकः, औदनिकः ॥ ७२ ॥

नवयज्ञाऽऽदयोऽस्मिन् वर्त्तन्ते । ६ । ४ । ७३ ।

एभ्यः प्रथमान्तेभ्यो वर्त्तन्ते इत्युपाधिभ्योऽस्मिन्निति सप्तम्यर्थे इकण् स्यात् । नावयज्ञिकः, पाकयज्ञिकः ॥७३ ।

तत्र नियुक्ते । ६ । ४ । ७४ ।

तत्रेति सप्तम्यन्ताद् नियुक्तेऽर्थे इकण् स्यात् । शौल्कशालिकः ॥ ७४ ॥

अगारान्ताद् इकः । ६ । ४ । ७५ ।

अस्मात् तत्र नियुक्ते इकः स्यात् । देवागारिकः ॥

अदेश-कालादध्यायिनि । ६ । ४ । ७६ ।

अध्ययनस्य यौ प्रतिषिद्धौ देशकालौ, तदर्थात् सप्तम्यन्ताद् अध्यायिन्यर्थे इकण् स्यात् । आशुचिकः, सान्ध्यिकः ॥

निकटाऽऽदिषु वसति । ६ । ४ । ७७ ।

एभ्यः सप्तम्यन्तेभ्यो वसत्यर्थे इकण् स्यात् । नैकटिकः, आरण्यिको भिक्षुः, वार्क्षमूलिकः ॥ ७७ ॥

सतीर्थ्यः । ६ । ४ । ७८ ।

समानतीर्थात् तत्र वसत्यर्थे यो निपात्यते, समानस्य च सभावः । सतीर्थ्यः ॥ ७८ ॥

प्रस्तार-संस्थान-तदन्त-कठिनान्तेभ्यो व्यवहरति । ६ । ४ । ७९ ।

---

१ वृक्षमूले वसतीति वार्क्षमूलिकः । समानतीर्थे गुरौ वसतीति सतीर्थ्यः ।

प्रस्तारसंस्थानाभ्यां तदन्तेभ्यः, कठिनान्ताच्च व्यवहरत्यर्थे इकण् स्यात् । प्रास्तारिकः, सांस्थानिकः, कांस्यप्रस्तारिकः, गौसंस्थानिकः, वांशकठिनिकः ॥ ७९ ॥

सङ्ख्याऽऽदेश्चाऽर्हदलुचः । ६ । ४ । ८० ।

अर्हदर्थमभिव्याप्य या प्रकृतिर्वक्ष्यते तस्याः केवलायाः सङ्ख्यापूर्वायाश्च वक्ष्यमाणः प्रत्ययः स्यादिति ज्ञेयम्, न चेत् सा लुगन्ता । चान्द्रायणिकः, द्वैचन्द्रायणिकः । अलुच इति किम् ? द्विशूर्पेण क्रीतेन क्रीतं द्विशौर्पिकम् ॥

गोदानाऽऽदीनां ब्रह्मचर्ये । ६ । ४ । ८१ ।

एभ्यः षष्ठ्यन्तेभ्यो ब्रह्मचर्येऽर्थे इकण् स्यात् । गौदानिकम्, आदित्यव्रतिकम् ॥ ८१ ॥

चन्द्रायणं च चरति । ६ । ४ । ८२ ।

अस्माद् द्वितीयान्ताद् गोदानाऽऽदेश्च चरत्यर्थे इकण् स्यात् । चान्द्रायणिकः, गौदानिकः ॥ ८२ ॥

देवव्रताऽऽदीन् डिन् । ६ । ४ । ८३ ।

एभ्यो निर्दशादेव द्वितीयान्तेभ्यश्चरत्यर्थे डिन् स्यात् । दैवव्रती, महाव्रती ॥ ८३ ॥

डकश्चाऽष्टाचत्वारिंशतं वर्षाणाम् । ६ ।४। ८४ ।

वर्षाणामष्टाचत्वारिंशतो द्वितीयान्तात् चरत्यर्थे डको डिन् च स्यात् । अष्टाचत्वारिंशकः, अष्टाचत्वारिंशी ॥ ८४ ॥

चातुर्मास्यन्तौ यलुक् च । ६ । ४ । ८५ ।

अस्माद् द्वितीयान्तात् चरत्यर्थे डक-डिनौ स्याताम्, यलुक् च । चातुर्मासकः, चातुर्मासी ॥ ८५ ॥

क्रोश-योजनपूर्वात् शताद् योजनाच्चाऽभिगमार्हे । ६ । ४ । ८६ ।

क्रोशपूर्वाद् योजनपूर्वाच्च शताद् योजनाच्च पञ्चम्यन्तादभिगमार्हेऽर्थे इकण् स्यात् । क्रौशशतिको मुनिः, यौजनशतिकः, यौजनिकः ॥ ८६ ॥

तद् यात्येभ्यः । ६ । ४ । ८७ ।

तदिति द्वितीयान्तेभ्य एभ्यः क्रोशशत-योजनशत-योजनेभ्यः, याति गच्छत्यर्थे इकण् स्यात् । क्रौशशतिकः, यौजनशतिकः, यौजनिको दूतः ॥ ८७ ॥

पथ-इकट् । ६ । ४ । ८८ ।

पथो[1] द्वितीयान्ताद् यात्यर्थे इकट् स्यात् । पथिको ॥८८॥

नित्यं णः पन्थश्च । ६ । ४ । ८९ ।

पथो द्वितीयान्ताद् नित्यं यात्यर्थे णः स्यात्, पन्थश्चास्य । पान्थः ॥ ८९ ॥

शङ्कूत्तर-कान्ताराऽज-वारि-स्थल-जङ्गलाऽऽदेस्तेनाऽऽहृते च । ६ । ४ । ९० ।

शंकादिपूर्वपदात् पथिनन्तात्, तेनेति तृतीयान्ताद् आहृते याति चार्थे इकण् स्यात् । शाङ्कुपथिकः, औत्तरपथिकः, कान्तारपथिकः, आजपथिकः, वारिपथिकः, स्थालपथिकः, जाङ्गलपथिकः ॥ ९०

स्थलाऽऽदेर्मधुक-मरिचेऽण् । ६ । ४ । ९१ ।

---

१ पथिन्शब्दात् । पन्थानं याति पथिकः, स्त्रियां तु ङित्वात् पथिकी । पन्थानं नित्यं याति पान्थः । स्त्री पान्था ।

स्थलपूर्वपदात् पथिनन्तादाहृते मधुके मरिचे चाऽथ्ऽण् स्यात् । स्थालपथं मधुकम्, मरिचं वा ॥ ९१ ॥

तुरायण-पारायणं यजमानाऽधी-
याने । ६ । ४ । ९२ ।

आभ्यां द्वितीयान्ताभ्यां यथासङ्ख्यं यजमानाधीयानयोरिकण् स्यात् । तौरायणिकः, पारायणिकः ॥ ९२ ॥

संशयं प्राप्ते ज्ञेये । ६ । ४ । ९३ ।

संशयमिति द्वितीयान्तात् प्राप्ते ज्ञेयेऽर्थे इकण् स्यात् । सांशयिकोऽर्थः ॥ ९३ ॥

तस्मै योगाऽऽदेः शक्ते । ६ । ४ । ९४ ।

एभ्यस्तस्मै इति चतुर्थ्यन्तेभ्यः शक्तेऽर्थे इकण् स्यात् । यौगिकः, सान्तापिकः ॥ ९४ ॥

योग-कर्मभ्यां योकञौ । ६ । ४ । ९५ ।

आभ्यां चतुर्थ्यन्ताभ्यां शक्तेऽर्थे यथासङ्ख्यं य-उकञौ स्याताम् । योग्यः, कार्मुकम् ॥ ९५ ॥

यज्ञानां दक्षिणायाम् । ६ । ४ । ९६ ।

एभ्यः षष्ठ्यन्तेभ्यो दक्षिणायामर्थे इकण् स्यात् । आग्निष्टोमिकी ॥ ९६ ॥

तेषु देये । ६ । ४ । ९७ ।

यज्ञार्थेभ्यः सप्तम्यन्तेभ्यो देयेऽर्थे इकण् स्यात् । वाजपेयिकं भक्तम् ॥ ९७ ॥

काले कार्ये च भववत् । ६ । ४ । ९८ ।

कालार्थात् सप्तम्यन्ताद् देये कार्ये चार्थे भवे इव प्रत्ययाः स्युः। यथा वर्षासु भवं वार्षिकम्, तथा कार्यं देयं च ॥ ९८ ॥

व्युष्टाऽऽदिष्वण्। ६। ४। ९९।

एभ्यः सप्तम्यन्तेभ्यो देये कार्ये चाण् स्यात्। वैयुष्टम्, नैत्यम् ॥ ९९ ॥

[1]यथाकथाचात् णः। ६। ४। १००।

अस्माद् देये कार्ये चार्थे णः स्यात्। याथाकथाचम् ॥

तेन हस्ताद् यः। ६। ४। १०१।

तेनेति तृतीयान्ताद् हस्ताद् देये कार्ये च यः स्यात्। हस्त्यम् ॥ १०१ ॥

शोभमाने। ६। ४। १०२।

टान्तात् शोभमाने इकण् स्यात्। [2]कार्णवेष्टकिकं मुखम् ॥ १०२ ॥

कर्म-वेषाद् यः। ६। ४। १०३।

आभ्यां टान्ताभ्यां शोभमानेऽर्थे यः स्यात्। कर्मण्यं शौर्यम्, वेष्यो नटः ॥ १०३ ॥

कालात् परिजय्य-लभ्य-कार्य-सुकरे।६।४।१०४।

कालविशेषार्थात् टान्तात् परिजय्याऽऽदावर्थे इकण् स्यात्। मासिको व्याधिः, पटः, चान्द्रायणं, प्रासादो वा ॥ १०४ ॥

निर्वृत्ते। ६। ४। १०५।

---

१ अनादरेणत्यर्थे यथाकथाच इत्यव्ययोऽस्ति। यथाकथाच दीयते इति विग्रहः।

२ कर्णवेष्टकाभ्यां कुण्डलाभ्यां शोभते इति। एवं कर्मण्यवेष्यावपि।

कालार्थात् दान्तात् निर्वृत्तेऽर्थे इकण् स्यात् । आह्निकम् ॥ १०५ ॥

तं भावि-भूते । ६ । ४ । १०६ ।

तमिति द्वितीयान्तात् कालार्थाद् भाविनि भूते चार्थे इकण् स्यात् । मासिक उत्सवः ॥ १०६ ॥

तस्मै भृताऽधीष्टे च । ६ । ४ । १०७ ।

तस्मै इति चतुर्थ्यन्तात् कालार्थाद् भृतेऽधीष्टे चार्थे इकण् स्यात् । मासिकः कर्मकरः, उपाध्यायो वा ॥

षण्मासाद्वयसि ण्येकौ । ६ । ४ । १०८ ।

अस्मात् कालार्थात् तेन निर्वृत्ते, तं भाविनि भूते, तस्मै भृताऽधीष्टे चेतिविषये ण्य इकश्च स्यात्, अवयसि गम्यमाने । षाण्मास्यः, षण्मासिकः ॥ १०८ ॥

समाया ईनः । ६ । ४ । १०९ ।

अस्मात् तेन निर्वृत्ते इत्यादिपञ्चकविषये ईनः स्यात् । समीनः ॥ १०९ ॥

रात्र्यहः-संवत्सराच्च द्विगोर्वा । ६ । ४ । ११० ।

रात्र्याद्यन्तात् समान्ताच्च द्विगोस्तेन निर्वृत्त इत्यादिपञ्चकविषये ईनो वा स्यात् । द्विरात्रीणः, द्वैरात्रिकः द्व्यहीनः, द्व्याह्निकः । द्विसंवत्सरीणः, द्विसांवत्सरिकः । द्विसमीनः, द्वैसमिकः ॥ ११० ॥

वर्षादश्च वा । ६ । ४ । १११ ।

---

१ अत्र तेन, तमादित्यनयोरनुवृत्ति । अहा निर्वृत्तमाह्निकम्, एवं मासिकादि ।

२ निर्वृत्त भावि-भूत भृत अधीष्टेतिपञ्चकविषयेषु । समया निर्वृत्त, समा भूतो भावी वा, समायै भृतोऽधीष्टो वा समीनः । एवं द्विवर्षीण-द्विवर्षीण द्वैसमिकादिष्वपि ।

कालवाचिवर्षान्ताद् द्विगोस्तेन निर्वृत्ते इत्यादिपञ्चकविषये ईनोऽश्च वा स्यात् । द्विवर्षः, द्विवर्षीणः, द्विवार्षिकः ॥ १११ ॥

प्राणिनि भूते । ६ । ४ । ११२ ।

कालार्थवर्षान्ताद् द्विगोर्भूते प्राणिन्यर्थे अः स्यात् । द्विवर्षो वत्सः । प्राणिनीति किम् ? द्विवर्षः, द्विवर्षीणः, द्विवार्षिकः सरकः ॥ ११२ ॥

मासाद् वयसि यः । ६ । ४ । ११३ ।

मासान्ताद् द्विगोर्भूतेऽर्थे यः स्यात्, वयसि गम्ये । द्विमास्यः शिशुः । वयसीति किम् ? द्वैमासिको व्याधिः ॥ ११३ ॥

ईनञ् च । ६ । ४ । ११४ ।

मासाद् भूतेऽर्थे इनञ् यश्च स्यात्, वयसि गम्ये । मासीनः, मास्यः शिशुः ॥ ११४ ॥

षण्मासाद् य-यण्-इकण् । ६ । ४ । ११५ ।

अस्मात् कालार्थाद् भूतेऽर्थे एते स्युः, वयसि गम्ये । षण्मास्यः, षाण्मास्यः, षाण्मासिकः शिशुः ॥ ११५ ॥

सोऽस्य ब्रह्मचर्य-तद्वतोः । ६ । ४ । ११६ ।

स इति प्रथमान्तात् कालार्थादस्येति षष्ठ्यर्थे, ब्रह्मचर्ये, ब्रह्मचारिणि चेकण् स्यात् । मासिकं ब्रह्मचर्यम्, मासिकस्तद्वान् ॥ ११६ ॥

प्रयोजनम् । ६ । ३ । ११७ ।

प्रथमान्तात् षष्ठ्यर्थे इकण् स्यात्, प्रथमान्तं चेत् प्रयोजनम्। जैनमहिकं देवागमनम् ॥ ११७ ॥

एकागारात् चौरे । ६ । ४ । ११८ ।

अस्मात् तदस्य प्रयोजनमितिविषये चौरेऽर्थे इकण् स्यात्। ऐकागारिकः ॥ ११८ ॥

चूडाऽऽदिभ्योऽण् । ६ । ४ । ११९ ।

एभ्यस्तदस्य प्रयोजनमितिविषयेऽण् स्यात्। चौडं श्राद्धम् ॥ ११९ ॥

विशाखाऽऽषाढात् मन्थ-दण्डे । ६ । ४ । १२० ।

आभ्यां तदस्य प्रयोजनमितिविषये यथासङ्ख्यं मन्थे दण्डे चाऽर्थेऽण् स्यात्। वैशाखो मन्थः, आषाढो दण्डः॥

उत्थापनाऽऽदेरीयः । ६ । ४ । १२१ ।

एभ्यस्तदस्य प्रयोजनमितिविषये ईयः स्यात्। उत्थापनीयः, उपस्थापनीयः ॥ १२१ ॥

विशि-रुहि-पदि-पूरि-समापेरनात् सपूर्वपदात् । ६ । ४ । १२२ ।

एभ्योऽनान्तेभ्यः सपूर्वपदेभ्यस्तदस्य प्रयोजनमित्यर्थे ईयः स्यात्। गृहप्रवेशनीयम्, आरोहणीयम्, गोप्रपदनीयम्, प्रपापूरणीयम्, अङ्गसमापनीयम् ॥ १२२ ॥

स्वर्ग-स्वस्तिवाचनाऽऽदिभ्यो य-लुपौ ।६।४।१२३।

स्वर्गादेः स्वस्तिवाचनादेश्च तदस्य प्रयोजनमित्यर्थे यथासंख्यं यो लुप् च स्यात्। स्वर्ग्यम्, आयुष्यम्, स्वस्तिवाचनम्, शान्तिवाचनम् ॥ १२३ ॥

१ जिनमह प्रयोजनमस्य जैनमहिकम्। जिनजन्मादिषु देवा आगच्छन्तीत्याचार ।

**समयात् प्राप्तः । ६ । ४ । १२४ ।**

समयात् प्रथमान्तात् षष्ठ्यर्थे इकण् स्यात्, चेत् समयः प्राप्तः । सामयिकं कार्यम् ॥ १२४ ॥

**ऋत्वादिभ्योऽण् । ६ । ४ । १२५ ।**

एभ्यः प्रथमान्तेभ्यः सोऽस्य प्राप्त इत्यर्थेऽण् स्यात् । आर्त्तवं फलम्, औपवस्त्रम् ॥ १२५ ॥

**कालाद् यः । ६ । ४ । १२६ ।**

कालात् सोऽस्य प्राप्त इत्यर्थे यः स्यात् । काल्या मेघाः ॥ १२६ ॥

**दीर्घः । ६ । ४ । १२७ ।**

कालात् प्रथमान्तादस्येत्यर्थे इकण् स्यात्, प्रथमान्तश्चेद् दीर्घः । कालिकमृणम् ॥ १२७ ॥

**आकालिकमिकश्चाऽऽद्यन्ते । ६ । ४ । १२८ ।**

आकालिकाद् इक इकण् च भवत्यर्थे स्यात्, आदिरेव यदि अन्तः । आकालिकोऽनध्यायः, पूर्वेद्युर्यस्मिन् काले प्रवृत्तोऽपरेद्युरपि आ तस्मात् कालाद् भवतीत्यर्थः । आकालिकी, आकालिका वा विद्युत्, आजन्मकालमेव स्यात्, जन्मानन्तरनाशिनीत्यर्थः ॥ १२८ ॥

**त्रिंशत्-विंशतेर्डकोऽसंज्ञायामाऽर्हदर्थे । ६ । ४ । १२९ ।**

---

१ आदिरेव यदि अन्ततया बोध्यते, यथा यस्मिन् क्षणे विद्युदुत्पन्ना तस्मिन्नेव क्षणे विनष्टा, विद्युतो जन्मलक्षणादिकालो विनाशलक्षणान्तकालादभिन्न इति भावः । आकालिकोऽनध्याय इत्यत्र यद्यपि गतः कालोऽपरेद्युर्न प्रत्यावर्तते, तथापि सामान्येन घटिकायामादिवेलाऽपेक्षया तुल्य उच्यते ।

आभ्यामा अर्हदर्थाद् योऽर्थो वक्ष्यते तस्मिन् डकः स्यात्, असंज्ञाविषये। त्रिंशकम्, विंशकम्, त्रिंशकः, विंशकः। असंज्ञायामिति किम्? त्रिंशत्कम्, विंशतिकम् ॥ १२९ ॥

सङ्ख्या-डतेश्चाऽशत्-ति-ष्टेः कः। ६। ४। १३०।

शदन्त-त्यन्त-ष्ट्यन्तवर्जसङ्ख्याया डत्यन्तात् त्रिंशद्विंशतिभ्यां चाऽऽर्हदर्थे कः स्यात्। द्विकम्, कतिकम्, त्रिंशत्कम्, विंशतिकम्। अशत्तिष्टेरिति किम्? चात्वारिंशत्कम्, सासतिकम्, षाष्टिकम् ॥ १३० ॥

शतात् केवलादतस्मिन् येकौ। ६। ४। १३१।

शतात् केवलादाऽर्हदर्थे य-इकौ स्याताम्, स चेदर्थः प्रकृत्यर्थात् नाऽभिन्नः। शत्यम्, शतिकम्। केवलादिति किम्? द्विशतकम्। अतस्मिन्निति किम्? शतकं स्तोत्रम् ॥ १३१ ॥

वाऽतोरिकः। ६। ४। १३२।

अत्वन्तसङ्ख्याया आर्हदर्थे इको वा स्यात्। यावतिकम्, यावत्कम् ॥ १३२ ॥

कार्षापणाद् इकट् प्रतिश्चास्य वा। ६। ४। १३३।

अस्मादार्हदर्थे इकट् स्यात्, अस्य च प्रतिर्वा। कर्षापणिकी, प्रतिकी ॥ १३३ ॥

अर्द्धात् पल-कंस-कर्षात्। ६। ४। १३४।

अर्द्धपूर्वात् पलाद्यन्तादार्हदर्थे इकट् स्यात्। अर्द्धपलिकम्, अर्द्धकंसिकम्, अर्द्धकर्षिकी ॥ १३४ ॥

---

१ कार्षापणशब्दस्य प्रति इत्यादेशो वा स्यात्। कार्षापणेन क्रीतं कार्षापणिकं, पक्षे, प्रतिकं, टित्वाद स्त्रियां ङी.। एवमुपरि अपश्च योग्यमा अर्हदर्थात्। आङ् अभिविधावस्ति।

कंसाऽर्द्धात् । ६ । ४ । १३५ ।

आभ्यामाऽर्हदर्थे इकट् स्यात् । कंसिकी, अर्द्धिकी ॥

सहस्र-शतमानादण् । ६ । ४ । १३६ ।

आभ्यामाऽर्हदर्थेऽण् स्यात् । साहस्रः, शातमानः ॥

शूर्पाद् वाऽञ् । ६ । ४ । १३७ ।

आऽर्हदर्थे वाऽञ् स्यात् । शौर्पम्, शौर्पिकम् ॥१३७॥

वसनात् । ६ । ४ । १३८ ।

आऽर्हदर्थेऽञ् स्यात् । वासनम् ॥ १३८ ॥

विंशतिकात् । ६ । ४ । १३९ ।

आऽर्हदर्थेऽञ् स्यात् । वैंशतिकम् ॥ १३९ ॥

द्विगोरीनः । ६ । ४ । १४० ।

विंशतिकान्ताद् द्विगोराऽर्हदर्थे ईनः स्यात् । द्विविंशतिकीनम् ॥ १४० ॥

अनाम्न्यद्विः प्लुप्[1] । ६ । ४ । १४१ ।

द्विगोराऽर्हदर्थे जातस्य प्रत्ययस्य पित् लुप् स्यात्, न तु द्विः, अनाम्नि । द्विकंसम् । अनाम्नीति किम् ? पाञ्चलोहितिकम् । अद्विरिति किम् ? द्विशूर्पेण क्रीतं द्विशौर्पिकम् ॥ १४१ ॥

नवाऽणः । ६ । ४ । १४२ ।

द्विगोः परस्याऽऽर्हदर्थेऽणः पित् लुब् वा स्यात्, न तु द्विः । द्विसहस्रम्, द्विसाहस्रम् ॥ १४२

---

१ लुप पित्करणात् "क्यङ्-मानि-पित्तद्धिते" इति सूत्रेण पञ्चकपाली इत्यादिषु पुंवद्भावः ।

सुवर्ण-कार्षापणात् । ६ । ४ । १४३ ।

एतदन्ताद् द्विगोः परस्याऽऽर्हदर्थे प्रत्ययस्य लुब्वा स्यात्, न तु द्विः । द्विसुवर्णम्, द्विसौवर्णिकम् । द्विकार्षापणम्, द्विकार्षापणिकम् ॥ १४३ ॥

द्वि-त्रि-बहोर्निष्क-विस्तात् । ६ । ४ । १४४ ।

एभ्यः परौ यौ निष्कविस्तौ तदन्ताद् द्विगोराऽर्हदर्थे प्रत्ययस्य लुब् वा स्यात्, अद्विः । द्विनिष्कम्, द्विनैष्किकम् । त्रिनिष्कम्, त्रिनैष्किकम् । बहुनिष्कम्, बहुनैष्किकम् । द्विविस्तम्, द्विवैस्तिकम् । त्रिविस्तम्, त्रिवैस्तिकम् । बहुविस्तम्, बहुवैस्तिकम् ॥ १४४ ॥

शतात् यः । ६ । ४ । १४५ ।

शतान्ताद् द्विगोराऽर्हदर्थे यो वा स्यात् । द्विशत्यम्, द्विशतिकम् ॥ १४५ ॥

शाणात् । ६ । ४ । १४६ ।

शाणान्ताद् द्विगोराऽर्हदर्थे यो वा स्यात् । पञ्चशाण्यम्, पञ्चशाणम् ॥ १४६ ॥

द्वि-त्र्यादेर्याऽण् वा । ६ । ४ । १४७ ।

द्वित्रिपूर्वो यः शाणः तदन्ताद् द्विगोराऽर्हदर्थे याऽणौ वा स्याताम् । द्विशाण्यम्, द्वैशाणम् । द्विशाणम्, त्रिशाण्यम् । त्रैशाणम्, त्रिशाणम् १४७ ॥

---

१ तुल्या यवाभ्यां कथिताऽत्र गुञ्जा, वल्लस्त्रिगुञ्जो धरणं च तेऽष्टौ । गद्याणकस्तद्‌द्वयमिन्द्रतुल्यैर्वल्लैस्तथैको घटकः प्रदिष्टः ॥ २ दशार्धगुञ्जं प्रवदन्ति माषं, माषाह्वयैः षोडशभिश्च कर्षम् । कर्षैश्चतुर्भिश्च पलं तुलाज्ञाः कर्षं सुवर्णस्य सुवर्णसंज्ञम् ३ ॥ इति श्रीभास्कराचार्यो लीलावत्यां परिभाषा-ग्रन्थे प्राह, एवं निष्कविस्तकार्षापणादीनां मानानि शार्ङ्गधरमहावीराचार्यादिषु द्रष्टव्यानि ।

पण-पाद-मापाद् यः । ६ । ४ । १४८ ।

पणाऽऽद्यन्ताद् द्विगोरार्हदर्थे यः स्यात् । द्विपण्यम्, द्विपाद्यम्, अध्यर्द्धमाप्यम् ॥ १४८ ॥

खारी-काकणीभ्यः कच् । ६ । ४ । १४९ ।

एतदन्ताद् द्विगोराभ्यां चाऽऽर्हदर्थे कच् स्यात् । द्विखारीकम्, द्विकाकणीकम्, खारीकम्, काकणीकम् ॥

मूल्यैः क्रीते । ६ । ४ । १५० ।

मूल्यार्थात् टान्तात् क्रीतेऽर्थे यथोक्तं प्रत्ययाः स्युः । प्रास्थिकम्, त्रिंशकम् ॥ १५० ॥

तस्य वापे । ६ । ४ । १५१ ।

तस्येति षष्ठ्यन्ताद् वापेऽर्थे यथोक्तं प्रत्ययाः स्युः । प्रास्थिकम्, खारीकम् ॥ १५१ ॥

वात-पित्त-श्लेष्म-सन्निपातात् शमन-कोपने । ६ । ४ । १५२ ।

एभ्यः षष्ठ्यन्तेभ्यः शमने कोपने चार्थे यथोक्तमिकण् स्यात् । वातिकम्, पैत्तिकम्, श्लैष्मिकम्, सान्निपातिकम् ॥ १५२ ॥

हेतौ संयोगोत्पाते । ६ । ४ । १५३ ।

षष्ठ्यन्ताद् हेतावर्थे यथोक्तं प्रत्ययः स्यात्, चेद् हेतुः संयोग उत्पातो वा । शत्यः, शतिको दातृसंयोगः, सोमग्रहणिको भूमिकम्पः ॥ १५३ ॥

पुत्राद् येयौ । ६ । ४ । १५४ ।

पुत्रात् षष्ठ्यन्ताद् हेतावर्थे य-ईयौ स्याताम्, चेद्धेतुः संयोग उत्पातो वा । पुत्र्य', पुत्रीयः ॥ १५४ ॥

## द्विस्वर-ब्रह्मवर्चसाद् योऽसङ्ख्या-परिमाणा-श्वाऽऽदेः । ६ । ४ । १५५

सङ्ख्यापरिमाणाऽश्वादिवर्जात् द्विस्वराद् ब्रह्मवर्चसाच्चषष्ठयन्ताद् हेतौ संयोगे उत्पाते वा यः स्यात् । धैन्यः, ब्रह्मवर्चस्यः । सङ्ख्यादिवर्जनं किम् ? पञ्चकः, प्रास्थिकः, आश्विकः ॥ १५५ ॥

## पृथिवी-सर्वभूमेरीश-ज्ञातयोश्चाञ् । ६ । ४ । १५६ ।

आभ्यां षष्ठयन्ताभ्यामीशज्ञातयोस्तस्य हेतुः संयोग उत्पात इति विषये चाऽञ् स्यात् । पार्थिवः, सार्वभौम ईशो ज्ञातः संयोगोत्पातरूपो हेतुर्वा ॥ १५६ ॥

## लोक-सर्वलोकाद् ज्ञाते । ६ । ४ । १५७ ।

आभ्यां षष्ठयन्ताभ्यां ज्ञातेऽर्थे यथोक्तं प्रत्ययः स्यात् । लौकिकः, सार्वलौकिकः ॥ १५७ ॥

## तदत्राऽस्मै वा वृद्धयाय-लाभोपदा-शुल्कं देयम् । ६ । ४ । १५८ ।

तदिति प्रथमान्ताद् अत्रेति सप्तम्यर्थेऽस्मै इति चतुर्थ्यर्थे वा यथोक्तं प्रत्ययः स्यात्, तच्चेत् प्रथमान्तं वृद्धयादि देयं च स्यात् । वृद्धिः, पञ्चकं शतम् । आयः, पञ्चको ग्रामः । लाभः पञ्चकः पटः । उपदा लञ्चा । पञ्चको व्यवहारः । शुल्कं,पञ्चकं शतम्, एवं शत्यं, शतिकम् ॥ १५८ ॥

## पूरणाऽर्द्धाद् इकः । ६ । ४ । १५९ ।

---

१ धनस्य हेतुः संयोग उत्पातो वा धन्यः । मव्यस्तु "गो स्वर य" (पृ० ४०४)सूत्रात् स्यात् ।

२ पृथिव्या ईशः, ज्ञातः, हेतुः संयोग उत्पातो वा पार्थिवः । एवं सार्वभौमः ।

पूरणप्रत्ययान्तादर्द्धाच प्रथमान्ताद् अस्मिन् अस्मै वा दीयते इत्यर्थयोरिकः स्यात्, प्रथमान्तं चेद् वृद्धयादि । द्वितीयिकः, अर्द्धिकः ॥ १५९ ॥

भागाद् येकौ । ६ । ४ । १६० ।

भागात् तदस्मिन्नस्मै वा वृद्धयाद्यन्यतमं देयमिति-विषये य-इकौ स्याताम् । भाग्यः, भागिकः ॥ १६० ॥

तं पचति द्रोणाद् वाऽञ् । ६ । ४ । १६१ ।

तमिति द्वितीयान्ताद् द्रोणात् पचत्यर्थे वाऽञ् स्यात् । द्रौणी, द्रौणिकी स्थाली ॥ १६१ ॥

सम्भवदवहरतोश्च । ६ । ४ । १६२ ।

द्वितीयान्तात् पचत्-सम्भवद्-अवहरत्सु यथोक्तं प्रत्ययः स्यात् । आधेयस्य प्रमाणानतिरेकेण धारणं सम्भवः । अतिरेकेणावहारः । प्रास्थिकी स्थाली ॥ १६२ ॥

पात्राऽऽचिताऽऽढकाद् ईनो वा । ६ । ४ ।१६३।

एभ्यो द्वितीयान्तेभ्यः पचदाद्यर्थे ईनो वा स्यात् । पात्रीणा, पात्रिकी, आचितीना, आचितिकी । आढकीना, आढकिकी ॥ १६३ ॥

द्विगोरीनेकटौ वा । ६ । ४ । १६४ ।

पात्राऽऽचिताऽऽढकान्ताद् द्विगोर्द्वितीयान्तात् पचदाद्यर्थे ईन-इकटौ वा स्याताम्, पक्षे इकण्, तस्य चानाम्नीत्यादिना प्लुप्, नानयोर्विधानबलात् । द्विपात्रीणा, द्विपात्रिकी, द्विपात्री । द्व्याचितीना, द्व्याचितिकी, द्व्याचिता । द्व्याढकीना, द्व्याढकिकी, द्व्याढकी ॥ १६४ ॥

१ "अनाम्न्यद्विः प्लुप्" (६-४-१४१) इत्यनेन । द्वे पात्रे पचति संभवत्यवहरति वा स्त्री द्विपात्रीणा । आचितशब्दान्तात् स्त्रियां ङीर्न भवति लुकि निषेधात्।

कुलिजाद् वा लुप् च । ६ । ४ । १६५ ।

कुलिजान्ताद् द्विगोर्द्वितीयान्तात् पचदाद्यर्थे ईनेकटौ वा स्याताम्, पक्षे इकण्, तस्य च वा लुप् । द्विकुलिजीना, द्विकुलिजिकी, द्विकुलिजी, द्वैकुलिजिकी ॥ १६५ ॥

वंशादेर्भाराद् हरद्-वहदावहत्सु । ६ । ४ । १६६ ।

एभ्यः परो यो भारस्तदन्ताद् द्वितीयान्तात् एष्वर्थेषु यथोक्तं प्रत्ययः स्यात् । वांशभारिकः, कौटभारिकः ॥

द्रव्य-वस्नात् केकम् । ६ । ४ । १६७ ।

आभ्यां द्वितीयान्ताभ्यां हरदाद्यर्थे यथासङ्ख्यं क इकश्च स्यात् । द्रव्यकः, वस्निकः ॥ १६७ ॥

सोऽस्य [1]भृति-वस्नांशम् । ६ । ४ । १६८ ।

स इति प्रथमान्ताद् भृत्याद्यर्थाद् अस्येति षष्ठ्यर्थे यथोक्तं प्रत्ययः स्यात् । पञ्चकः कर्मकृत् पटो ग्रामो वा, साहस्रः ॥ १६८ ॥

मानम् । ६ । ४ । १६९ ।

प्रथमान्तात् षष्ठ्यर्थे यथोक्तं प्रत्ययः स्यात्, स्यन्तं चेद् मानम् । द्रौणिकः, खारीको राशिः ॥ १६९ ॥

जीवितस्य सन् । ६ । ४ । १७० ।

जीवितमानार्थात् स्यन्तात् षष्ठ्यर्थे यथोक्तं प्रत्ययः स्यात्, तस्य च [2]न लुप् । द्विषाष्टिको ना ॥ १७० ॥

सङ्ख्यायाः संघ-सूत्र-पाठे । ६ । ४ । १७१ ।

---

१ भृतिर्वेतनम् । वस्नो नियतमूल्यमुच्यते । पञ्चास्य भृतिर्वस्नं वा पञ्चकः ।
२ "अनाम्न्यद्विः." इति लुप् न स्यात् । द्वे षष्टी जीवितमानमस्य द्विषाष्टिकः ।

अस्मात् स्यन्ताद् अस्य मानमित्यर्थे यथोक्तं प्रत्ययः स्यात्, पञ्चार्थश्चेत् सङ्घः, सूत्रं, पाठो वा । पञ्चकः सङ्घः, अष्टकं पाणिनीयं सूत्रम्, अष्टकः पाठः ॥ १७१ ॥

नाम्नि । ६ । ४ । १७२ ।

सङ्ख्यार्थात् तदस्य मानमित्यर्थे यथोक्तं प्रत्ययः स्यात्, नाम्नि । पञ्चकाः शकुनयः ॥ १७२ ॥

विंशत्यादयः । ६ । ४ । १७३ ।

एते तदस्य मानमित्यर्थे साधवः स्युः, नाम्नि । द्वौ दशतौ मानमेषां विंशतिः, त्रिंशत् ॥ १७३ ॥

त्रैंश-चात्वारिंशम् । ६ । ४ । १७४ ।

त्रिंशत्चत्वारिंशद्भ्यां तदस्य मानमित्यर्थे डण् स्यात्, नाम्नि । त्रैंशानि, चात्वारिंशानि ब्राह्मणानि ॥

पञ्चद्-दशद् वर्गे वा । ६ । ४ । १७५ ।

एतौ तदस्य मानमितिविषये वर्गेऽर्थेऽवृत्तौ वा निपात्यौ । पञ्चत, दशत्, पञ्चकः, दशको वर्गः ॥ १७५ ॥

स्तोमे डट् । ६ । ४ । १७६ ।

सङ्ख्यार्थात् तदस्य मानमितिविषये स्तोमेऽर्थे डट् स्यात् । विंशः स्तोमः ॥ १७६ ॥

तमर्हति । ६ । ४ । १७७ ।

तमिति द्वितीयान्तादर्हदर्थे यथोक्तं प्रत्ययः स्यात् । वैधिकः, साहस्रः ॥ १७७ ॥

दण्डाऽऽदेर्यः । ६ । ४ । १७८ ।

एभ्यो द्वितीयान्तेभ्योऽर्हदर्थे यः स्यात् । दण्ड्यः, अर्घ्यः ॥

यज्ञाद् इयः । ६ । ४ । १७९ ।

7111

द्वितीयान्ताद् यज्ञादर्हति इयः स्यात्। यज्ञियो देशः॥

पात्रात् तौ । ६ । ४ । १८० ।

द्वितीयान्तात् पात्राद् अर्हति य-इयौ स्याताम्। पात्र्यः, पात्रियः ॥ १८० ॥

दक्षिणा-कडङ्गर-स्थालीबिलाद् ईय-यौ ।६।४।१८१।

एभ्यो द्वितीयान्तेभ्योऽर्हत्यर्थे ईययौ स्याताम्। दक्षिणीयो, दक्षिण्यो गुरुः, कडङ्गरीयः, कडङ्गर्यो गौः, स्थालीबिलीयाः, स्थालीबिल्यास्तण्डुलाः ॥ १८१ ॥

छेदाऽऽदेर्नित्यम् । ६ । ४ । १८२ ।

अस्माद् द्वितीयान्तात् नित्यमर्हति यथोक्तं प्रत्ययः स्यात्। छैदिकः, भैदिकः ॥ १८२ ॥

विरागाद् विरङ्गश्च । ६ । ४ । १८३ ।

अस्माद् द्वितीयान्तान्नित्यमर्हति यथोक्तं प्रत्ययः स्यात्, तद्योगे चास्य विरङ्गः। वैरङ्गिकः ॥ १८३ ॥

शीर्षच्छेदाद् यो वा । ६ । ४ । १८४ ।

अस्माद् द्वितीयान्तान्नित्यमर्हति यो वा स्यात्। शीर्षच्छेद्यः, शीर्षच्छेदिकश्चौरः ॥ १८४ ॥

शालीन-कौपीनाऽऽर्त्विजीनम् । ६ । ४ । १८५ ।

एते तमर्हतीत्यर्थे ईनञन्ता निपात्याः। शालीनोऽधृष्टः, कौपीनं पापकर्मादिः, आर्त्विजीनो यजमान ऋत्विग्वा ॥

इत्याचार्यहेमचन्द्रविरचितायां सिद्धहेमचन्द्राभिधानस्वोपज्ञशब्दानुशासनलघुवृत्तौ षष्ठोऽध्यायः समाप्तः ॥ ॥ ६ । ४ ॥

॥ इति षष्ठोऽध्यायः ॥

अर्हम्

# ॥ अथ सप्तमाध्यायस्य प्रथमः पादः ॥

## यः । ७ । १ । १ ।

यदित ऊर्ध्वमनुक्रमिष्यामस्तत्र ईयादर्वाग् य इत्यधिकृतं ज्ञेयम् ॥ १ ॥

## वहति रथ-युग-प्रासङ्गात् । ७ । १ । २ ।

तमिति वर्तते । एभ्यो द्वितीयान्तेभ्यो वहत्यर्थे यः स्यात् । रथ्यः, युग्यः । प्रासङ्गो वत्सदमनस्कन्धकाष्ठम् । प्रासङ्ग्यः ॥ २ ॥

## धुरो येयण् । ७ । १ । ३ ।

धुरो द्वितीयान्ताद् वहत्यर्थे एतौ स्याताम् । धुर्यः, धौरेयः ॥ ३ ॥

## वामाऽऽद्यादेरीनः । ७ । १ । ४ ।

वामादिपूर्वाद् धुरन्तादमन्ताद् वहत्यर्थे ईनः स्यात् वामधुरीणः, सर्वधुरीणः ॥ ४ ॥

## अश्चैकाऽऽदेः । ७ । १ । ५ ।

एकपूर्वाद् धुरन्तादमन्ताद् वहत्यर्थे अ ईनश्च स्यात् । एकधुरः, एकधुरीणः ॥ ५ ॥

## हल-सीराद् इकण् । ७ । १ । ६ ।

आभ्यां तं वहत्यर्थे इकण् स्यात् । हालिकः, सैरिकः ॥

---

१ "ईय (७-१-२८) इति सूत्रेण ईय प्रत्यय, तस्मात् ईयात् पूर्वमपवाद परित्यज्य याधिकारो वर्तते ।

२ वामा चासौ धूश्च त समासान्तत्वादापि वामधुरा, ता वहतीति वाम[illegible]ण, क्व[illegible]दपीति कश्चित्, धुरीण । एवमेकधुर–हालिकशाकटादिष्वपि पठन्ति ।

शकटादण् । ७ । १ । ७ ।

अस्मात् तं वहत्यर्थेऽण् स्यात् । शाकटो गौः ॥ ७ ॥

विध्यत्यनन्येन । ७ । १ । ८ ।

द्वितीयान्ताद् विध्यत्यर्थे यः स्यात्, न चेदात्मनोऽन्येन करणेन विध्येत् । पद्याः[1] शर्कराः । अनन्येनेति किम् ? चौरं विध्यति चैत्रः ॥ ८ ॥

धनगणात् लब्धरि । ७ । १ । ९ ।

आभ्याममन्ताभ्यां लब्धर्यर्थे यः स्यात् । धन्यः, गण्यः ॥

णोऽन्नात् । ७ । १ । १० ।

अन्नाद् अमन्तात् लब्धरि णः स्यात् । आन्नः ॥१०॥

हृद्य-पद्य-तुल्य-मूल्य-वश्य-पथ्य-वयस्य-धेनुष्या-

गार्हपत्य-जन्य-धर्म्यम् । ७ । १ । ११ ।

एतेऽर्थविशेषेषु यान्ता निपात्याः । हृद्यमौषधम्, पद्यः पङ्कः, तुल्यं भाण्डं सदृक्षम्, मूल्यं धान्यं पटादिविक्रयाल्लभ्यं च, वश्यो गौः, पथ्यमोदनादि, वयस्य सखा, धेनुष्या पीतदुग्धा गौः, गार्हपत्यो नामाग्निः, जन्या वरवयस्याः, धर्म्यं सुखम् । ११ ॥

नौ-विषेण तार्य-वध्ये । ७ । १ । १२

आभ्यां निर्देशादेव तृतीयान्ताभ्यां यथासङ्ख्यं तार्ये वध्ये चार्थे यः स्यात् । नाव्या नदी, विष्यो गज ॥१२॥

१ पादौ विध्यन्तीति पद्याः । "हिमहतिकाषिये पद्" इति पदादेशः ।

२ अमन्ताद् द्वितीयाप्रत्ययान्ताद् । एवं अन्नात् इति तृतीयान्ततया तादर्थ्ये ।

३ हृदयस्य प्रियं हृद्यम् । पद्यमस्मिन् द्रष्टं पद्यः पङ्कः । तुल्यया संमितं तुल्यं भाण्डम्, मूल्यैरुपादेयं मूल्यं धान्यम्, मूलेनाऽऽनाम्यं मूल्यम् । वशं गतो वश्यः । पथो अनपेतं पथ्यम् । वयसा तुल्यो वयस्यो मित्रार्थे, अन्यत्र तु नैव स्यात् । गृहपतिना संयुक्तो गार्हपत्यः ।

**न्यायाऽर्थादनपेते । ७ । १ । १३ ।**

आभ्यां पञ्चम्यन्ताभ्यामनपेतेऽर्थे यः स्यात् । न्याय्यम्, अर्थ्यम् ॥ १३ ॥

**मत-मदस्य करणे । ७ । १ । १४ ।**

आभ्यां षष्ठ्यन्ताभ्यां करणे यः स्यात् । मत्यम्, मद्यम् ॥ १४ ॥

**तत्र साधौ । ७ । १ । १५ ।**

तत्रेति सप्तम्यन्तात् साधावर्थे यः स्यात् । सभ्यः ॥

**पथ्यतिथि-वसति-स्वपतेरेयण् । ७ । १ । १६ ।**

एभ्यस्तत्र साधावेयण् स्यात् । पाथेयम्, आतिथेयम्, वासतेयम्, स्वापतेयम् ॥ १६ ॥

**भक्तात् णः । ७ । १ । १७ ।**

भक्तात् तत्र साधौ णः स्यात् । भाक्तः शालिः ॥१७॥

**पर्षदो ण्य-णौ । ७ । १ । १८ ।**

तत्र साधौ स्याताम् । पार्षद्यः, पार्षदः ॥ १८ ॥

**सर्वजनात् ण्येनञौ । ७ । १ । १९ ।**

तत्र साधौ स्याताम् । सार्वजन्यः, सार्वजनीनः ॥

**प्रतिजनादेरीनञ् । ७ । १ । २० ।**

तत्र साधौ स्यात् । प्रातिजनीनः, आनुजनीनः ॥२०॥

**कथाऽऽदेरिकण् । ७ । १ । २१ ।**

तत्र साधौ स्यात् । काथिकः, वैकथिकः ॥ २१ ॥

**देवतान्तात् तदर्थे । ७ । १ । २२ ।**

---

१ ण्य-ईनञ् इत्येतौ स्त । सर्वजनेषु साधुरिति विग्रह । एवमन्यत्रापि ।

देवताऽन्तात् तदर्थे यः स्यात्। अग्निदेवत्यं हविः ॥

पाद्याऽर्घ्ये । ७ । १ । २३ ।[1]

एतौ तदर्थे यान्तौ निपात्यौ। पाद्यं जलम्, अर्घ्यं रत्नम् ॥ २३ ॥

ण्योऽतिथेः । ७ । १ । २४ ।

तदर्थेऽर्थे स्यात्। आतिथ्यम् ॥ २४ ॥

साऽऽदेश्चा तदः । ७ । १ । २५ ।

"तद्" (७-१-५०) इति सूत्रं यावत् केवलस्य साऽऽदेश्च वक्ष्यमाणो विधिर्ज्ञेयः ॥ २५ ॥

हलस्य कर्षे । ७ । १ । २६ ।

हलात् षष्ठ्यन्तात् कर्षेऽर्थे यः स्यात्। हल्या, द्विहल्या ॥

सीतया संगते । ७ । १ । २७ ।

अस्मात् टाऽन्तात् सङ्गतेऽर्थे यः स्यात्। सीत्यम्, त्रिसीत्यम् ॥ २७ ॥

ईयः । ७ । १ । २८ ।

आ तदो वक्ष्यमाणार्थेषु ईयोऽधिकृतो ज्ञेयः ॥ २८ ॥

हविरन्नभेदाऽपूपाऽऽदेर्यो वा । ७ । १ । २९ ।

हविर्भेदाद्, अन्नभेदाद् अपूपादेश्चाऽऽतदोऽर्थेषु वा योऽधिक्रियते। आमिक्ष्यम्, आमिक्षीयम्। ओदन्याः, ओदनीयास्तण्डुलाः। अपूप्यम्, अपूपीयम्। यवापूप्यम्, यवापूपीयम् ॥ २९ ॥

---

१ "तद्" इति सूत्र यावत् ये प्रत्यया वक्ष्यन्ते ते केवलात् निर्दिष्टशब्दात् तदन्ताच यथाप्रयोगं भवन्तीत्यर्थः। यथा हलस्य कर्षे हल्यति केवलात्, द्विहल्येति तदन्तादुदाहरणम्। अधिकारोऽयम्। एवं सीत्यत्रिसीत्यादि।

**उवर्ण-युगाऽऽदेर्यः । ७ । १ । ३० ।**

उवर्णान्ताद् युगाऽऽदेश्चाऽऽतदोऽर्थेषु यः स्यात् । शङ्कव्यं दारु, युग्यं, हविष्यम् ॥ ३० ॥

**नाभेर्नभ् चाऽदेहांशात् । ७ । १ । ३१ ।**

अदेहांशार्थात् नाभेरा तदोऽर्थेषु यः स्यात्, नभ् चाऽस्य । नभ्योऽक्षः । अदेहांशादिति किम् ? नाभ्यं तैलम् ॥

**न्चोधसः । ७ । १ ३२ ।**

आ तदोऽर्थेषु ऊधसो यः स्यात्, न्चान्तस्य। औधन्यम् ॥

**शुनो वश्चोदूत् । ७ । १ । ३३ ।**

आ तदोऽर्थेषु शुनो यः स्यात्, वश्च उदूद्रूपः । शुन्यम्, शून्यम् ॥ ३३ ॥

**कम्बलात् नाम्नि । ७ । १ । ३४ ।**

अस्मादा तदोऽर्थेषु नाम्नि यः स्यात् । कम्बल्यम् ऊर्णापलशतम् । नाम्नीति किम् ? कम्बलीया ऊर्णा॥३४॥

**तस्मै हिते । ७ । १ । ३५ ।**

तस्मै इति चतुर्थ्यन्तात् हितेऽर्थे यथाऽधिकृतं प्रत्ययः स्यात् । वत्सीयः[1], आमिक्ष्यः, आमिक्षीयः, युग्यः ॥

**न राजाऽऽचार्य-ब्राह्मण-वृष्णः । ७ । १ । ३६ ।**

एभ्यश्चतुर्थ्यन्तेभ्यो हितेऽधिकृतः प्रत्ययो न स्यात् । राज्ञे, आचार्याय, ब्राह्मणाय, वृष्णे वा हित इति वाक्यमेव ॥ ३६ ॥

---

१ वत्सेभ्यो हितो वत्सीय । आमिक्षायै हित आमिक्ष्य इत्यत्र 'हविरन्नभेदा " (७-१-२९ ) सूत्रात् य, पक्षे ईय । एवं शुने हितं शुन्यं शून्यमिति "शुनो वश्चोदूत्' सूत्रात् सिध्यति ।

प्राण्यङ्ग-रथ-खल-तिल-यव-वृष-ब्रह्म-मा-
पाद् यः । ७ । १ । ३७ ।

प्राण्यङ्गार्थेभ्यो रथादिभ्यश्चतुर्थ्यन्तेभ्यो हिते यः स्यात् । दन्त्यम्, रथ्या भूमिः, खल्यम्, तिल्यम्, यव्यम्, वृष्यं क्षीरम्, ब्रह्मण्यो देशः, माष्यः, राजमाष्यः ॥ ३७ ॥

अव्यजात् थ्यप् । ७ । १ । ३८ ।

आभ्यां तस्मै हिते थ्यप् स्यात् । अविथ्यम्, अजथ्या यूतिः ॥ ३८ ॥

चरक-माणवाद् ईनञ् । ७ । १ । ३९ ।

आभ्यां तस्मै हिते ईनञ् स्यात् । चारकीणः, माणवीनः ॥ ३९ ॥

भोगोत्तरपदाऽऽत्मभ्यामीनः । ७ । १ । ४० ।

भोग उत्तरपदं यस्य तस्माद्, आत्मनश्च तस्मै हिते ईनः स्यात् । मातृभोगीण, आत्मनीनः ॥ ४० ॥

पञ्च-सर्व-विश्वात् जनात् कर्मधारये । ७ । १ । ४१ ।

पञ्चादे परात् जनात् कर्मधारयवृत्तेः तस्मै हिते ईनः स्यात् । पञ्चजनीनः, सर्वजनीनः, विश्वजनीनः । कर्मधारय इति किम् ? पञ्चानां जनाय हितः पञ्चजनीयः ॥[१]

महत्-सर्वाद् इकण् । ७ । १ । ४२ ।

आभ्यां परात् जनात् कर्मधारयवृत्तेस्तस्मै हिते इकण् स्यात् । माहाजनिकः, सार्वजनिकः ॥ ४२ ॥

सर्वात् णो वा । ७ । १ । ४३ ।

---

१ पञ्चानां जनेभ्यस्तस्मै जनाय हित इति वाच्यम् । अत्र कर्मधारयाऽभावान्न ईनः । पञ्चजनेभ्यो हित पञ्चजनीन इत्यत्र प्रस्तुतसूत्रादीनप्रत्यय ।

अस्मात् तस्मै हिते णो वा स्यात्। सार्वः, सर्वीयः ॥

परिणामिनि[1] तदर्थे । ७ । १ । ४४ ।

चतुर्थ्यन्तात् चतुर्थ्यर्थे परिणामिनि हेतावर्थे यथाऽधिकृतं प्रत्ययः स्यात्। अङ्गारीयाणि काष्ठानि, शङ्कव्यं दारु। ४४ ॥

चर्मण्यञ् । ७ । १ । ४५ ।

चतुर्थ्यन्तात् तदर्थे परिणामिनि चर्मण्यर्थेऽञ् स्यात्। वार्ध्रं चर्म ॥ ४५ ॥

ऋषभोपानहात् ञ्यः । ७ । १ । ४६ ।

आभ्यां चतुर्थ्यन्ताभ्यां परिणामिनि तदर्थे ञ्यः स्यात्। आर्षभ्यो वत्सः, औपानह्यो मुञ्जः ॥ ४६ ॥

छदिस्-बलेरेयण् । ७ । १ । ४७ ।

आभ्यां चतुर्थ्यन्ताभ्यां परिणामिनि तदर्थे एयण् स्यात्। छादिषेयं तृणम्, बालेयास्तण्डुलाः ॥ ४७ ॥

[2]परिखाऽस्य स्यात् । ७ । १ । ४८ ।

अस्मात् स्यन्तादस्येति षष्ठ्यर्थे परिणामिन्येयण् स्यात्, सा चेत् स्यादितिसम्भाव्या। पारिखेय्य इष्टकाः ॥

अत्र च । ७ । १ । ४९ ।

परिखायाः स्यादितिसम्भाव्याय स्यन्ताया, अत्रेति सप्तम्यर्थे एयण् स्यात्। पारिखेयी भूमिः ॥ ४९ ॥

---

१ परिणामि द्रव्यमुपादानकारणम्, तस्मिन्नभिधेये । अङ्गारेभ्य इमानि अङ्गा- रीयाणि काष्ठानि, अत्र काष्ठानि परिणामीनि । एवं प्राकारीया इष्टकाः, वार्ध्रादि ।

२ प्रथमान्तात् । सा चेद् अनेनोपादानकारणेन इनासादिति समाव्यतेऽनुमीयते इत्यर्थः । यथा 'इष्टकाना परिखा स्यात्' इत्यनुमीयते इति पारिखेय्य इष्टका, णित्वाद् ङीप् वृद्धिश्च ।

तद् । ७ । १ । ५० ।

तदिति स्यन्तात्, स्यादिति सम्भाव्यात्, षष्ठ्यर्थे परिणामिनि सप्तम्यर्थे च, यथाऽविकृतं प्रत्ययः स्यात् । प्राकारीया इष्टकाः, परशव्यमयः, प्रासादीयो देशः ॥ ५० ॥

तस्याऽर्हे क्रियायां वत् । ७ । १ । ५१ ।

तस्येति षष्ठ्यन्तात् क्रियारूपेऽर्हेऽर्थे वत् स्यात् । राजवद् वृत्तं राज्ञः । क्रियायामिति किम् ? राज्ञोऽर्हो मणिः ॥ ५१ ॥

[1]स्यादेरिवे । ७ । १ । ५२ ।

स्याद्यन्ताद् इवार्थे सादृश्ये क्रियाऽर्थे वत् स्यात् । अश्ववद् याति चैत्रः, देववत् पश्यन्ति मुनिम् ॥ ५२ ॥

तत्र । ७ । १ । ५३ ।

तत्रेति सप्तम्यन्ताद् इवार्थे वत् स्यात् । मधुरावत् साकेते परिखा ॥ ५३ ॥

तस्य । ७ । १ । ५४ ।

तस्येति षष्ठ्यन्तादिवार्थे वत् स्यात् । चैत्रवत् मैत्रस्य भूः ॥ ५४ ॥

---

१ प्रथमाद्वितीयातृतीयाचतुर्थीपञ्चम्याद्यन्तादित्यर्थः । बन्धुनेव बन्धुवत् लिखति, राज्ञे इव राजवत् स्वराज्याय दत्तं धनम्, पर्वतादिव पर्वतवत् पतति वृक्षाद् इति शेषा प्रयोगाः । षष्ठीसप्तम्योस्त्वक्रियायामपि स्यात्, यथोत्तरत्र सूत्रे, राजवद् वृत्तं राजार्हं वृत्तमित्यर्थः । पञ्चाशत्तमसूत्रे ईयाधिकारः समाप्तः । सादृश्यं नाम गुणक्रियादिरूपं साधर्म्यम् । उपमायामिवस्थाने वत् प्रयुज्यते । उपमायाश्च उपमानोपमेयसाधारणधर्मा उपमावाचकश्चेवादिशब्द इति चत्वारि अङ्गानि सन्ति । साधारणधर्मवत्त्वेन विख्यातं वस्तु उपमानम् । तद्धर्मवत्त्वेन कविबुद्धिगोचरं विधीयमानं वस्तु उपमेयम् । उपमानोपमेययोः साधारणतया वर्तमानो गुणक्रियादिरूपो धर्मः साधारणधर्मः । यथा चन्द्रवत् प्रकाशते मुखम् । इववद् यथावानिभतु यादय शब्दा उपमावाचकाः ।

## [1]भावे त्व-तल् । ७ । १ । ५५ ।

षष्ठयन्ताद् भावे एतौ स्याताम् । शब्दस्य प्रवृत्तिहेतुर्गुणो भावः । गोत्वम्, गोता, शुक्लत्वम्, शुक्लता ॥

## प्राक् त्वादगडुलादेः । ७ । १ । ५६ ।

"[2]ब्रह्मणस्त्वः" (७-१-७७) इत्यतोऽर्वाक् त्वतलावधिकृतौ ज्ञेयौ, न तु गडुलादेः, तत्रैवोदाहरिष्येते । गडुलादिवर्जनं किम् ? गाडुल्यम्, कामण्डलयम् ॥ ५६ ॥

## नञ्तत्पुरुषादबुधाऽऽदेः । ७ । १ । ५७ ।

प्राक् त्वात् नञ्पूर्वात् तत्पुरुषाद् बुधाऽऽद्यन्तवर्जात् त्व-तलावेव स्याताम्, इत्यधिकृतं ज्ञेयम् । अशुक्लत्वम्, अशुक्लता, अपतित्वम्, अपतिता । अबुधादेरिति किम् ? आबुध्यम्, आचतुर्यम् ॥ ५७ ॥

## पृथ्वादेरिमन् वा । ७ । १ । ५८ ।

एभ्यो भावे वा इमन् स्यात् । प्रथिमा, पृथुत्वम्, पृथुता, पार्थवम् । म्रदिमा, मृदुता, मार्दवम् ॥ ५८ ॥

## वर्णदृढाऽऽदिभ्यः ट्यण् च वा । ७ । १ । ५९ ।

---

१ अत्र भावस्य आत्मार्थ । जातिश्च नित्यैकानेकगता सामान्यपदाभिधेया
द्रव्यगुणकर्मवृत्तिर्नैयायिकमतम् । नित्यत्वे सति अनेकव्यक्तिसमवेतत्व जातिलक्षणमिति, यथा गोत्वशुक्लत्वमनुष्यत्वादि । सा च मुख्यावान्तरभेदाभ्यां द्विधा ।

२ "ब्रह्मणस्त्व" इति सूत्रस्थितत्वशब्दात् पूर्वं गडुलादीन् वर्जयित्वा त्वतलधिकार इत्यर्थः । केचिद् गडुलाऽऽदेरपीच्छन्ति, तन्मते गडुलत्व गडुलतेति स्त ।

३ अत्रैवस्वरात् "वर्णदृढादिभ्यः ट्यण् च वा" इति ट्यण् बाधितो भवति न शुक्लोऽशुक्ल, तस्य भावोऽशुक्लत्वमित्यत्र ट्यण् न स्यात् । एवं "पति राजान्त ." (७-१-६०) इति विहितात् पतिगणान्तट्यण् बाध्यते, तत नञ्तत्पुरुष अपतित्वं, अपतित्वम स्त ।

वर्णविशेषार्थेभ्यो दृढाऽऽदेश्च तस्य भावे ट्यण् इमन् च स्याद् वा। शौक्ल्यम्, शुक्लिमा, शुक्लत्वम्, शुक्लता, शैत्यम्, शितिमा, शितित्वम्, शितिता, शैतम्। दार्ढ्यम्, दृढिमा, दृढत्वम्, दृढता, वैमत्यम्, विमतिमा, विमतित्वम्, विमतिता, वैमतम् ॥ ५९ ॥

पति-राजान्तगुणाङ्ग-राजादिभ्यः कर्मणि च । ७ । १ । ६० ।

पत्यन्तराजान्तेभ्यो गुणोऽङ्गं प्रवृत्तौ हेतुर्येषां तेभ्यो, राजादेश्च, तस्य भावे क्रियायां च ट्यण् स्यात्। आधिपत्यम्, अधिपतित्वम्, अधिपतिता, आधिराज्यम्, अधिराजत्वम्, अधिराजता, मौढ्यम्, मूढत्वम्, मूढता, राज्यम्, राजत्वम्, राजता, काव्यम् कवित्वम्, कविता ॥ ६० ॥

अर्हतस्तोन्त् च । ७ । १ । ६१ ।

अस्मात् तस्य भावे कर्म्मणि च ट्यण् स्यात्, तद्योगे च तस्य न्तादेशः। आर्हन्त्यम्, अर्हत्त्वम्, अर्हत्ता ॥६१॥

सहायाद् वा । ७ । १ । ६२ ।

अस्मात् तस्य भावे कर्म्मणि च ट्यण् स्याद् वा। साहाय्यम्, साहायकम्, सहायत्वम्, सहायता ॥६२॥

१ आन्तरारिहननात् रजोहननात् रहस्याभावाच्च तीर्थकरादिवाचकोऽर्हन् शब्दः पृषोदरादेः सिध्यति। तस्याऽर्हतो भावः कर्म वा आर्हन्त्यम्। व्याकरणपूर्णतत्त्वाऽवेदिन आर्हन्त्यमिति प्रयोगमशुद्धं विकल्प्य सकलार्हत्प्रतिष्ठानमितिपद्ये आर्हन्त्यमिति प्रयोगं प्रामादिकं शङ्कन्ते, तत् तेषामेतत्सूत्रानवबोधात् स्खलितमेव विज्ञेयम्, व्याकरणब्रह्मणो हेमचन्द्राचार्यस्य प्रयोगे प्रमादाऽसम्भवात्। णित्त्वात् स्त्रियां ङीप्रत्यये आर्हन्ती इति स्यात्। प्रयोगद्वयेऽपि एतेन सूत्रेणाऽर्हतः ट्यण् प्रत्ययः न्तादेशश्च विधीयेते। पक्षे त्वादि। अणि परे आर्हतम्।

सखि-वणिग्-दूताद् यः । ७ । १ । ६३ ।

एभ्यस्तस्य भावे कर्म्मणि च यः स्यात् । सख्यम्, सखित्वम्, सखिता, वणिज्या, वणिक्त्वम्, वणिक्ता, वाणिज्यम्, दूत्यम्, दूतत्वम्, दूतता, दौत्यम् ॥ ६३ ॥

स्तेनात् नलुक् च । ७ । १ । ६४ ।

स्तेनात् तस्य भावे कर्म्मणि च यः स्यात्, तद्योगे च नस्य लुक् । स्तेयम्, स्तेनत्वम्, स्तेनता, स्तैन्यम् ॥

कपि-ज्ञातेरेयण् । ७ । १ । ६५ ।

आभ्यां तस्य भावे कर्म्मणि चैयण् स्यात् । कापेयम्, कपित्वम्, कपिता, ज्ञातेयम्, ज्ञातित्वम्, ज्ञातिता ॥

प्राणिजाति-वयोऽर्थादञ् । ७ । १ । ६६ ।

प्राणिजात्यर्थात् वयोऽर्थाच्च तस्य भावे कर्मणि चाञ् स्यात् । आश्वम्, अश्वत्वम्, अश्वता, कौमारम्, कुमारत्वम्, कुमारता ॥ ६६ ॥

युवादेरण् । ७ । १ । ६७ ।

एभ्यस्तस्य भावे कर्म्मणि चाण् स्यात् । यौवनम्, युवत्वम्, युवता, स्थाविरम्, स्थविरत्वम्, स्थविरता ॥

हायनान्तात् । ७ । १ । ६८ ।

अस्मात् तस्य भावे कर्म्मणि चाण् स्यात् । द्वैहायनम्, द्विहायनत्वम्, द्विहायनता ॥ ३८ ॥

वृवर्णात् लघ्वादेः । ७ । १ । ६९ ।

*लघुरादिः समीपो येषां इ-उ-ऋवर्णानां तदन्तेभ्य-* तस्य भावे कर्म्मणि चाण् स्यात् । शौचम्, शुचित्वम्, शुचिता, एवं हारीतकम्, पाटवम्, बाधवम्, पैत्रम् । लघ्वादेरिति किम्? पाण्डुत्वम् ॥ ६९ ॥

## पुरुष-हृदयादसमासे । ७ । १ । ७० ।

आभ्यामसमासविषयाभ्यां तस्य भावे कर्मणि चाण् स्यात् । पौरुषम्, पुरुषत्वम्, पुरुषता, एवं हार्दम् । असमास इति किम्? परमपुरुषत्वम्, परमपौरुषमिति मा भूत् ॥ ७० ॥

## श्रोत्रियाद् यलुक् च । ७ । १ । ७१ ।

अस्मात् तस्य भावे कर्म्मणि चाण् स्यात्, तद्योगे च यस्य लुक् च। श्रौत्रम्, श्रोत्रियत्वम्, श्रोत्रियता, [1]श्रौत्रियकम् ॥ ७१ ॥

## योपान्त्याद् [2]गुरूपोत्तमादसुप्रख्याद-कञ् । ७ । १ । ७२ ।

त्र्यादीनामन्त्यमुत्तमम्, तत्समीपमुपोत्तमम्, तद् गुरुर्यस्य तस्माद् युपान्त्यात् सुप्रख्यवर्जात् तस्य भावे कर्म्मणि चाऽकञ् स्यात् । रामणीयकम्, रमणीयत्वम्, रमणीयता, एवमाचार्यकम् । गुरूपोत्तमादिति किम्? क्षत्रियत्वम्, कायत्वम् । असुप्रख्यादिति किम्? सुप्रख्यत्वम्, सौप्रख्यम् ॥ ७२ ॥

## चोराऽऽदेः । ७ । १ । ७३ ।

एभ्यस्तस्य भावे कर्मणि चाकञ् स्यात् । चौरिका, चोरत्वम्, चोरता, एवं धौर्त्तिका ॥ ७३ ॥

## द्वन्द्वात् लित् । ७ । १ । ७४ ।

---

१ श्रोत्रियस्य चोरादित्वात् "चोरादेः" इतिसूत्राद् अकञ्प्रत्ययोऽपि पक्षे भवति ।

२ दीर्घो विसर्गानुस्वारसंयोगान्तश्च वर्णो गुरुरुच्यते, तेनानेनाकञ्प्रत्ययविधानेऽपि आचार्यस्य भाव आचार्यकमित्यपि स्यात् ।

द्वन्द्वात् तस्य भावे कर्मणि च लिद् अकञ् स्यात् । वैत्रिरका, विनृत्वम्, विनृता ॥ ७४ ॥

**गोत्र-चरणात् श्लाघाऽत्याकार-प्राप्त्यवगमे । ७ । १ । ७५ ।**

गोत्रार्थचरणार्थाभ्यां तस्य भावे कर्म्मणि च लिद्-कञ् स्यात्, श्लाघाऽऽदिविषये । गार्गिकया श्लाघते, अत्याकुरुते वा, गार्गिकां प्राप्तोऽवगतो वा, एवं काठिकयेत्यादि । श्लाघाऽऽदिष्विति किम् ? गार्गम्, काठम् ॥

**होत्राभ्य ईयः । ७ । १ । ७६ ।**

होत्रा ऋत्विग्विशेषः । तदर्थात् तस्य भावे कर्म्मणि चेयः स्यात् । मैत्रावरुणीयम् । त्वतलावपि ॥ ७६ ॥

**ब्रह्मणस्त्वः । ७ । १ । ७७ ।**

अस्माद् ऋत्विगर्थात् तस्य भावे कर्म्मणि त्वः स्यात् । ब्रह्मत्वम् ॥ ७७ ॥

**शाकट-शाकिनौ क्षेत्रे । ७ । १ । ७८ ।**

षष्ठ्यन्तात् क्षेत्रेऽर्थे एतौ स्याताम् । इक्षुशाकटम्, शाकशाकिनम् ॥ ७८ ॥

**धान्येभ्य ईनञ् । ७ । १ । ७९ ।**

धान्यार्थेभ्यः षष्ठ्यन्तेभ्यः क्षेत्रेऽर्थे ईनञ् स्यात् । मौद्गीनम्, कौद्रवीणम् ॥ ७९ ॥

---

१ विद्य ना चेति वि-नरौ तयोर्विरोधोऽत्र कर्म वा वैचित्रिका-पञ्चिपुरस्सरमि-त्यर्थं । ञित्त्वात् स्त्रीलिङ्गे भवति । लिदकञ् परत्वात् "प्राणभृत्..." इति-सूत्रात् प्राप्तोऽण् बाध्यते । परेण पूर्वबाध इति वचनात् । त्वतलौ च भवतः ।

२ चरण शाखानिमित्त कठादि । गोत्रचरणयोः प्रकरणात्स्त्रीत्व च । गार्ग्य-स्य भाव कर्म वा गार्गिका तथा काठिका ।

व्रीहि-शालेरेयण् । ७ । १ । ८० ।

आभ्यां तस्य क्षेत्रे एयण् स्यात् । व्रैहेयम्, शालेयम्॥

यव-यवक-षष्टिकाद् यः । ७ । १ । ८१ ।

एभ्यस्तस्य क्षेत्रे यः स्यात् । यव्यम् , यवक्यम् , षष्टिक्यम् ॥ ८१ ॥

वाऽणु-माषात् । ७ । १ । ८२ ।

आभ्यां तस्य क्षेत्रे यो वा स्यात् । अणव्यम् , आणवीनम् । माष्यम् , माषीणम् ॥ ८२ ॥

वोमा-भङ्गा-तिलात् । ७ । १ । ८३ ।

एभ्यस्तस्य क्षेत्रेऽर्थे यो वा स्यात् । उम्यम् , औमीनम्। भङ्ग्यम्, भाङ्गीनम्। तिल्यम्, तैलीनम्॥८३॥

अलाब्वाश्च कटो रजसि । ७ । १ । ८४ ।

अस्माद् उमाऽऽदेश्च तस्य रजस्यर्थे कटः स्यात्। अलाबूकटम्, उमाकटम् , भङ्गाकटम् , तिलकटम् ॥ ८४ ॥

अह्ना गम्येऽश्वाद् ईनञ् । ७ । १ । ८५ ।

षष्ठ्यन्तादश्वात् एकेनाह्ना गम्येऽर्थे ईनञ् स्यात् । आश्वीनोऽध्वा ॥ ८५ ॥

कुलात् जल्पे । ७ । १ । ८६ ।

षष्ठ्यन्तात् कुलात् जल्पेऽर्थे ईनञ् स्यात् । कौलीनः॥

पील्वादेः कुणः पाके । ७ । १ । ८७ ।

एभ्यस्तस्य पाके कुणः स्यात्। पीलुकुणः, शमीकुणः॥

कर्णाऽऽदेर्मूले जाहः । ७ । १ । ८८ ।

एभ्यस्तस्य मूलेऽर्थे जाहः स्यात् कर्णजाहम् , अक्षिजाहम् ॥ ८८ ॥

पक्षात् तिः । ७ । १ । ८९ ।

पक्षात् तस्य मूलेऽर्थे तिः स्यात् । पक्षतिः ॥ ८९ ॥

हिमाद् एलुः सहे । ७ । १ । ९० ।

हिमात् तस्य सहमानेऽर्थे एलुः स्यात् । हिमेलुः ॥

बल-वातादूलः । ७ । १ । ९१ ।

आभ्यां तस्य सहेऽर्थे ऊलः स्यात् । बलूलः, वातूलः॥

शीतोष्ण-तृपाद् [प्राद् ?] आलुरसहे । ७ । १ । ९२ ।

एभ्यस्तस्यासहेऽर्थे आलुः स्यात् । शीतालुः, उष्णालुः, तृपालुः, [तृपालुः?] ॥ ९२ ॥

यथामुख-संमुखाद् ईनः तद् दृश्यते-ऽस्मिन् । ७ । १ । ९३ ।

आभ्यां तदिति स्यन्ताभ्यां, अस्मिन्निति ङ्यर्थे ईनः स्यात्, स्यन्तं चेद् दृश्यते । यथामुखं प्रतिबिम्बम्, यथामुखीन आदर्शः, एवं संमुखीनः ॥ ९३ ॥

सर्वाऽऽदेः पथ्यङ्ग-कर्म-पत्र-पात्र-शरावं व्याप्नोति । ७ । १ । ९४ ।

सर्वशब्दपूर्वेभ्य एभ्यो द्वितीयान्तेभ्यो व्याप्नोतीत्यर्थे ईनः स्यात् । सर्वपथीनो रथः, सर्वाङ्गीणस्तापः, सर्वकर्मीणो ना, सर्वपत्रीणो यन्ता, सर्वपात्रीणं भक्तम्, सर्वशरावीणं ओदनम् ॥ ९४ ॥

आप्रपदम् । ७ । १ । ९५ ।

आ पदाग्राद् आप्रपदम्, अस्मादमन्ताद् व्याप्नोतीत्यर्थे ईनः स्यात् । आप्रपदीनः पटः ॥ ९५ ॥

ऽनुपदं बद्धा । ७ । १ । ९६ ।

अस्मादमन्तात् बद्धेत्यर्थे ईनः स्यात्। अनुपदीनोपानत् । ९६ ॥

अयानयं नेयः । ७ । १ । ९७ ।

अस्माद् द्वितीयान्तात् नेयेऽर्थ ईनः स्यात् । अयानयीनः शारः ॥ ९७ ॥

सर्वाऽन्नमत्ति । ७ । १ । ९८ ।

अस्मादन्नाद् अत्त्यर्थे ईनः स्यात् । सर्वान्नीनो भिक्षुः ॥ ९८ ॥

परोवरीण-परम्परीण-पुत्रपौत्रीणम् । ७ । १ । ९९ ।

एतेऽनुभवत्यर्थे ईनान्ता निपात्याः । परोवरीणः, परम्परीणः, पुत्रपौत्रीणः ॥ ९९ ॥

यथाकामाऽनुकामाऽत्यन्तं गामिनि ।७।१।१००।

एभ्योऽमन्तेभ्यो गामिन्यर्थे ईनः । स्यात् । यथाकामीनः, अनुकामीनः, अत्यन्तीनः ॥ १०० ॥

पारावारं व्यस्त-व्यत्यस्तं च । ७ । १ । १०१ ।

अस्मात् समस्ताद् व्यस्ताद् व्यत्यस्ताचामन्ताद् गामिनीनः स्यात् । पारावारीणः, पारीणः, अवारीणः, अवारपारीणः ॥ १०१ ॥

अनुग्वलम् । ७ । १ । १०२ ।

अस्मादमन्ताद् अलङ्गामिनि ईनः स्यात्। अनुगवीनो गोपः ॥ १०२ ॥

अध्वानं येनौ । ७ । १ । १०३ ।

अस्मादमन्ताद् अलङ्गामिनि य-ईनौ स्याताम्। अध्वन्यः, अध्वनीनः ॥ १०३ ॥

अभ्यमित्रमीयश्च । ७ । १ । १०४ ।

अस्मादमन्ताद् अलङ्गामिनि ईयो य-ईनौ च स्याताम्। अभ्यमित्रीयः, अभ्यमित्र्यः, अभ्यमित्रीणः ॥ १०४ ॥

[1]समांसमीनाऽद्यश्वीनाऽद्यप्रातीनाऽऽगवीन-साप्तपदीनम् । ७ । १ । १०५ ।

एते ईनान्ता निपात्याः, साप्तपदीनस्त्वीनअन्तः । समांसमीना गौः, अद्यश्वीना गौः, अद्यप्रातीनो लाभः, आगवीनः कर्मकृत्, साप्तपदीनं सख्यम् ॥ १०५ ॥

[2]अषडक्षाऽऽशितंग्वलङ्कर्माऽलंपुरुषाद् ईनः ।७।१।१०६।

एभ्यः स्वार्थे ईनः स्यात् । अषडक्षीणो मन्त्रः, आशितंगवीनं अरण्यम्, अलङ्कर्मीणः, अलंपुरुषीणः॥१०६॥

अदिक्स्त्रियां वाऽञ्चः । ७ । १ । १०७ ।

अञ्चत्यन्तात् स्वार्थे ईनो वा स्यात्, न चेद् स दिशि स्त्रियाम् । प्राचीनम्, प्राक् । प्राचीना शाखा, प्राची । अदिक्स्त्रियामिति किम् ? प्राची दिक् ॥ १०७ ॥

---

१ अभ्यमित्र अलङ्गामी अभ्यमित्रीय ।

२ समां समामिति वीप्सया द्वितीयान्ताद् गर्भं धारयतीत्यर्थे निपात समां समीना गौ । अद्य श्वो वा विजनिष्यमाणा अद्यश्वीना गौ, प्रत्यासन्नप्रसवकालेत्यर्थः । एवमद्यश्वीना मृत्युर्लाभो भोगो वेत्यादि । अद्य प्रातर्वा भविष्यति अद्यप्रातीनो लाभ । आगोप्रतिदाने कर्मकर आगवीन । सप्तभि पदैरवाप्यत साप्तपदीन सख्य मैत्री मित्र च । ञित्वाद् वृद्धि ।

३ अविद्यमानानि षड् अक्षीणि अस्मिन् स मन्त्र कर्तृको वा । स्त्रिया अषडक्षीणा क्रीडेति, सामान्येन्द्रियार्थे वाऽक्षशब्द । आशिता गावोऽस्मिन्निति । अलं कर्मणे पुरुषाय वाऽलमिति अलङ्कर्मणि यादि, "प्रान्यत्र ." (पृ० १३९) इति समास ।

तस्य तुल्ये कः संज्ञा-प्रतिकृत्योः । ७ । १ । १०८ ।

तस्येति षष्ठयन्तात् तुल्येऽर्थे कः स्यात्, संज्ञायां प्रतिकृतौ च विषये । अश्वकः, अश्वकं रूपम् ।। १०८ ।।

न नृ-पूजाऽर्थ-ध्वज-चित्रे । ७ । १ । १०९ ।

नरि, पूजार्थे, ध्वजे, चित्रकर्मणि चार्थे को न स्यात्। चञ्चा ना, अर्हन्, ध्वजे सिंहः, चित्रे भीमः ।। १०९ ।।

[1]अपण्ये जीवने । ७ । १ । ११० ।

जीव्यते येन तस्मिन् पण्यवर्जे को न स्यात् । शिवः । अपण्य इति किम्? हस्तिकान् विक्रीणीते ।। ११० ।।

देव-पथाऽऽदिभ्यः । ७ । १ । १११ ।

एभ्यस्तुल्ये संज्ञाप्रतिकृत्योः को न स्यात् । देवपथः[2], हंसपथः ।। १११ ।।

[3]बस्तेरेयञ् । ७ । १ । ११२ ।

बस्तेस्तस्य तुल्येऽर्थे एयञ् स्यात्। बास्तेयी प्रणालिका ।। ११२ ।।

शिलाया एयच्च । ७ । १ । ११३ ।

अस्मात् तस्य तुल्येऽर्थे एयच् एयञ् च स्यात्। शिलेयम्, शैलेयं दधि ।। ११३ ।।

शाखाऽऽदेर्यः । ७ । १ । ११४ ।

एभ्यस्तस्य तुल्ये यः स्यात् । शाख्यः, मुख्यः ।।११४।।

---

१ शिवप्रतिकृत्या देवलको जीवनीत्यर्थे । शिवस्य तुल्य शिव. । पण्यं विक्रेतव्यम्, तद्भिन्ने जीवने ।

२ देवपथेन तुल्यो देवपथ इत्यादि। देवपथादिराकृतिगण ।

३ अत्र सूत्रे तस्य तुल्य इत्यनुवर्तते, न संज्ञाप्रतिकृत्योरिति । बस्तिरिति यदि इष्यतेऽन्यत्र ।

द्रोर्भव्ये । ७ । १ । ११५ ।

द्रोस्तस्य तुल्ये भव्येऽर्थे यः स्यात् । द्रव्यमयं ना, स्वर्णादि च ॥ ११५ ॥

कुशाग्राद् ईयः । ७ । १ । ११६ ।

अस्मात् तस्य तुल्ये ईयः स्यात् । कुशाग्रीया बुद्धिः॥

काकतालीयाऽऽदयः । ७ । १ । ११७ ।

एते तस्य तुल्ये ईयान्ताः साधवः स्युः । काकतालीयम्, खलतिबिल्वीयम् ॥ ११७ ॥

शर्कराऽऽदेरण् । ७ । १ । ११८ ।

एभ्यस्तस्य तुल्येऽण् स्यात् । शार्करं दधि, कापालिकम् ॥ ११८

अः सपत्न्याः । ७ । १ । ११९ ।

अस्मात् तस्य तुल्ये अः स्यात् । सपत्नः ॥ ११९ ॥

एकशालाया इकः । ७ । १ । १२० ।

अस्मात् तस्य तुल्ये इकः स्यात् । एकशालिकम् ॥

गोण्यादेश्चेकण् । ७ । १ । १२१ ।

एभ्य एकशालायाश्च तस्य तुल्ये इकण् स्यात् । गौणिकम्, आङ्गुलिकम्, ऐकशालिकम् ॥ १२१ ॥

कर्कलोहितात् टीकण् च । ७ । १ । १२२ ।

आभ्यां तस्य तुल्ये टीकण् इकण् च स्यात् । कार्कीकः, कार्किकः, लौहितीकः, लौहितिकः ॥ १२२ ॥

वेर्विस्तृते शाल-शङ्कटौ । ७ । १ । १२३ ।

वेर्विस्तृतेऽर्थे शालशङ्कटौ स्याताम् । विशालः, विशङ्कटः ॥ १

कटः । ७ । १ । १२४ ।

वेर्विस्तृतेऽर्थे कटः स्यात् । विकटः ॥ १२४ ॥

सं-प्रोत्-नेः संकीर्ण-प्रकाशाऽधिक-समीपे । ७ । १ । १२५ ।

एभ्यो यथासङ्ख्यमेष्वर्थेषु कटः स्यात् । सङ्कटः, प्रकटः, उत्कटः, निकटः ॥ १२५ ॥

अवात् कुटारश्चावनते । ७ । १ । १२६ ।

अवाद् अवनतेऽर्थे कुटारः कटश्च स्यात् । अवकुटारः, अवकटः ॥ १२६ ॥

[1]नासानति-तद्वतोः टीट-नाट-भ्रटम् ।७।१।१२७।

अवात् नासानतौ तद्वति चार्थे एते स्युः । अवटीटम्, अवनाटम्, अवभ्रटं नासानमनम्, तद्वद् वा नासादि ॥

नेरिन-पिट-काः चिक्-चि-चिकश्चाऽस्य । ७ । १ । १२८ ।

नेर्नासानतौ तद्वति चार्थे एते स्युः, तद्योगे च नेर्यथासङ्ख्यं चिक्चिचिकः । चिकिनम्, चिपिटम्, चिक्कं नासानमनं नासादि च ॥ १२८ ॥

विड-विरीसौ नीरन्ध्रे च । ७ । १ । १२९ ।

१ अवटीऽमित्यादेर्नासानमनमित्यर्थः । नासानमनवती नासिकाऽपि अवटीटा इत्युच्यते । पुरुषोऽवटीट । अप्रियं गर्ह्यं वा वस्तु विलोक्य या नासिकानतिर्भवति, तत्रावटीटावनाटावभ्रटशब्दा प्रयुज्यन्ते ।

नेर्नीरन्ध्रे, नासानतितद्वतोश्च एतौ स्याताम्। निबिडाः, निबिरीसाः केशाः, निबिडम्, नबिरीसं नासानमनं नासादि च॥ १२९॥

क्लिन्नात् लश्चक्षुषि, चिल्-पिल्-चुल चास्य। ७। १। १३०।

क्लिन्नात् चक्षुष्यर्थे लः स्यात्, तद्योगे चास्य चिल्-पिल्-चुलः। चिल्लम्, पिल्लम्, चुल्लं चक्षुः॥ १३०॥

उपत्यकाऽधित्यके। ७। १। १३१।

एतौ निपात्येते। उपत्यका गिर्यासन्ना भूः, अधित्यका पर्वताऽधिरूढा भूः॥ १३१॥

अवेः संघात-विस्तारे कट-पटम्। ७। १। १३२।

अवेरर्थात् षष्ठ्यन्तात् संघाते विस्तारे चार्थे यथासङ्ख्यं कटपटौ स्याताम्। अविकटः संघातः, अविपटो विस्तारः॥ १३२॥

पशुभ्यः स्थाने गोष्ठः। ७। १। १३३॥

पश्वर्थेभ्यः षष्ठ्यन्तेभ्यः स्थानेऽर्थे गोष्ठः स्यात्। गोगोष्ठम्, अश्वगोष्ठम्॥ १३३॥

द्वित्वे गोयुगः। ७। १। १३४।

पश्वर्थेभ्यस्तस्य द्वित्वेऽर्थेऽयं स्यात्। गोगोयुगम्॥

षट्त्वे षड्गवः। ७। १। १३५।

पश्वर्थेभ्यस्तस्य षट्त्वेऽयं स्यात्। हस्तिषड्गवम्॥१३५॥

**तिलाऽऽदिभ्यः स्नेहे तैलः । ७ । १ । १३६ ।**

एभ्यस्तस्य स्नेहेऽर्थे तैलः स्यात् । तिलतैलम्, सर्षपतैलम् ॥ १३६ ॥

**तत्र घटते कर्म्मणष्ठः । ७ । १ । १३७ ।**

तत्रेति ङ्यन्तात् कर्म्मशब्दाद् घटते इत्यर्थे ठः स्यात्। कर्म्मठः ॥ १३७

**तदस्य सञ्जातं तारकाऽऽदिभ्य**
**इतः । ७ । १ । १३८ ।**

तदिति स्यन्तेभ्य एभ्योऽस्येति षष्ठ्यर्थे इतः स्यात्, स्यन्तं सञ्जातं चेत् । तारकितं नभः, पुष्पितस्तरुः ॥१३८॥

**गर्भादप्राणिनि । ७ । १ । १३९ ।**

गर्भात् तदस्य सञ्जातमित्यर्थे इतः स्यात्, न तु प्राणिनि । गर्भितो व्रीहिः ॥ १३९ ॥

**प्रमाणात् मात्रट् । ७ । १ । १४० ।**

स्यन्तात् प्रमाणार्थात् षष्ठ्यर्थे मात्रट् स्यात्। आयामः प्रमाणम्[1] । जानुमात्रं जलम्, तन्मात्री भूः ॥ १४० ॥

**हस्ति-पुरुषाद् वाऽण् । ७ । १ । १४१ ।**

स्यन्ताभ्यां प्रमाणार्थाभ्यामाभ्यां षष्ठ्यर्थेऽण् वा स्यात् । हास्तिनम्, हस्तिमात्रम्, हस्तिदघ्नम्, हस्तिद्वयसं जलम्, एवं पौरुषम् ॥ १४१ ॥

---

१ प्रमाणं द्विधा ऊर्ध्वतिर्यग्भेदात् । आद्यमूर्ध्वस्य, द्वितीयं च तिर्यग्मानस्योदाहरणम् । जानुनी प्रमाणमस्य जानुमात्रम् । टित्त्वात् "अणञेये..." सूत्राद् ङी-प्रत्यये परे तन्मात्री । एवं दघ्नटादावपि विग्रहः कार्यः । स्यन्तात् प्रथमान्तादित्यर्थः । हस्ती प्रमाणमस्य हास्तिनं जलम् ।

वोर्ध्वे दघ्नट्-द्वयसट् । ७ । १ । १४२ ।

ऊर्ध्वं यत् प्रमाणं तदर्थात् स्यन्तात् षष्ठ्यर्थे वैतौ स्याताम् । ऊरुदघ्नम्, ऊरुद्वयसम्, ऊरुमात्रं जलम् । ऊर्ध्वमिति किम् ? रज्जुमात्री भूः ॥ १४२ ॥

मानादसंशये लुप् । ७ । १ । १४३ ।

मानार्थ एव साक्षाद् यः प्रमाणशब्दो हस्तवितस्त्यादिर्नतु रज्ज्वादिः, तस्मात् प्रस्तुतस्य मात्रडादेरसंशये गम्ये लुप् स्यात् । हस्तः, वितस्तिः । मानादिति किम् ? ऊरुमात्रं जलम् । असंशय इति किम् ? शममात्रं स्यात् ॥

द्विगोः संशये च । ७ । १ । १४४ ।

मानान्तात् द्विगोः संशयेऽसंशये च प्रस्तुतमात्रडादेर्लुप् स्यात् । द्विवितस्तिः, द्विप्रस्थः स्यात् ॥ १४४ ॥

मात्रट् । ७ । १ । १४५ ।

स्यन्तात् मानार्थात् षष्ठ्यर्थे मात्रट् स्यात्, संशये । प्रस्थमात्रं स्यात् ॥ १४५ ॥

शन्-शत् विंशतेः । ७ । १ । १४६ ।

शन्नन्तात्, शदन्ताच, सङ्ख्याऽर्थाद् विंशतेश्च मानवृत्तेः स्यन्तात् षष्ठ्यर्थे मात्रट् स्यात्, संशये । दशमात्राः स्युः, एवं त्रिंशन्मात्राः, विंशतिमात्राः ॥१४६॥

डिन्[2] । ७ । १ । १४७ ।

शन्शद्विंशतिभ्यः स्यन्तेभ्यो मानार्थेभ्यः षष्ठ्यर्थे डिन् स्यात् । पञ्चदशी अर्धमासः, त्रिंशी मासः, विंशिनो भवनेन्द्राः ॥ १४७ ॥

---

१ शम चतुर्विंशतिरङ्गुलानि । शम प्रमाणमस्य स्यात् शममानम् ।

२ डित्वाद् "डित्यन्त्यस्वरादेः" इतिसूत्रात् स्वरादेर्लुक् । दण्डिवच रूपाणि स्युः ।

इदं-किमोऽतुः, इय-किय् चास्य । ७ । १ । १४८ ।

आभ्यां मानार्थाभ्यां षष्ठ्यर्थे मेयेऽतुः स्यात्, तद्योगे चानयोर्यथासङ्ख्यमियकियौ स्याताम् । इयान्, कियान् पटः ॥ १४८ ॥

यत्-तत्-एतदो डावादिः । ७ । १ । १४९ ।

एभ्यः स्यन्तेभ्यो मानार्थेभ्यः षष्ठ्यर्थे मेयेऽतुर्डावादिः स्यात् । यावान्, तावान्, एतावान् धान्यराशिः ॥१४९॥

यत्-तत्-किमः सङ्ख्याया डतिर्वा ।७।१।१५०।

सङ्ख्यारूपं यत् मानं तदर्थेभ्य एभ्यः स्यन्तेभ्यः षष्ठ्यर्थे सङ्ख्येये डतिर्वा स्यात् । यति, यावन्तः । एवं तति, तावन्तः । कति, कियन्तः ॥ १५० ॥

अवयवात् तयट् । ७ । १ । १५१ ।

अवयववृत्तेः सङ्ख्यार्थात् स्यन्तात् षष्ठ्यर्थेऽवयविनि तयट् स्यात् । पञ्चतयो यमः ॥ १५१ ॥

द्वि-त्रिभ्यामयट् वा । ७ । १ । १५२ ।

आभ्यामवयवार्थाभ्यां स्यन्ताभ्यां षष्ठ्यर्थेऽयट् वा स्यात् । द्वयम्, द्वितयम् । त्रयम्, त्रितयम् ॥ १५२ ॥

द्व्यादेर्गुणात् मूल्य-क्रेये मयट् ।७।१।१५३।

द्व्यादेर्गुणवृत्तेः स्यन्तात् षष्ठ्यर्थे मयट् स्यात्, द्व्यादिश्चेन् मूल्यार्थः क्रय्यार्थो वा । द्विमयमुदश्विद्यवानाम्, एवं त्रिमयं द्विमया यवा उदश्वितः, एवं त्रिमयाः । गुणाद्विति [illegible] ॥ १५३ ॥

अधिकं तत्सङ्ख्यमस्मिन् शत-सहस्रे शति-शत्-दशान्ताया डः । ७ । १ । १५४ ।

स्यन्तात् शत्याद्यन्तात् सङ्ख्यार्थादस्मिन्निति ङ्यर्थे, शतसहस्रे च डः स्यात्, स्यन्तं चेदधिकं शतादिमङ्ख्यं च वस्तु स्यात् । विंशं योजनशतं, योजनसहस्रं वा, एवं त्रिंशम्, एकादशम् । तत्संख्यमिति किम् ? विंशतिः दण्डा अधिका अस्मिन् योजनशते ॥ १५४ ॥

सङ्ख्यापूरणे डट् । ७ । १ । १५५ ।

सङ्ख्या पूर्यते येन तत्रार्थे सङ्ख्याया डट् स्यात् । एकादशी । सङ्ख्येति किम् ? एकादशानामुष्ट्रिकाणां पूरणो घटः ॥ १५५ ।

विंशत्यादेर्वा तमट् । ७ । १ । १५६ ।

अस्याः संख्यायाः सङ्ख्यापूरणे तमट् वा स्यात् । विंशतितमः, विंशः । त्रिंशत्तमः, त्रिंशः ॥ १५६ ॥

शतादिमासार्द्धमास-संवत्सरात् ।७।१।१५७।

शतादेः सङ्ख्याया मासादेश्च सङ्ख्यापूरणे तमट् स्यात् । शततमी, सहस्रतमी, मासतमः, अर्द्धमासतमः, संवत्सरतमो दिनः ॥ १५७ ॥

षष्ट्यादेरसङ्ख्याऽऽदेः । ७ । १ । १५८ ।

सङ्ख्यादिरवयवो यस्य तद्वर्जात् षष्ट्यादेः सङ्ख्यापूरणे तमट् स्यात् । षष्टितमः, सप्ततितमः । असङ्ख्याऽऽदेरिति किम् ? एकषष्टः ॥ १५८ ॥

नो मट् । ७ । १ । १५९ ।

असङ्ख्यादेर्नान्तायाः सङ्ख्यायाः सङ्ख्यापूरणे मट् स्यात् । पञ्चमी । असङ्ख्यादेरित्येव ? द्वादशः ॥१५९॥

पित् तिथट् बहु-गण-पूग-संघात् । ७ । १ ।१६० ।

एभ्यः संख्यापूरणे तिथट् स्यात्, पित् । बहुतिथी, गणतिथः, पूगतिथः, सङ्घतिथः ॥ १६० ॥

अतोरिथट् । ७ । १ । १६१ ।

अत्वन्तात् संख्यापूरणे इथट् स्यात्, पित् । इयतिथः, तावतिथी ॥ १६१ ॥

षट्-कति-कतिपयात् थट् । ७ । १ । १६२ ।

एभ्यः सख्यापूरणे थट् स्यात् । षष्ठी, कतिथः, कतिपयथ १६२ ॥

चतुरः । ७ । १ । १६३ ।

अस्मात् संख्यापूरणे थट् स्यात् । चतुर्थी ॥ १६३ ॥

येयौ च लुक् च । ७ । १ । १६४ ।

चतुरः संख्यापूरणे एतौ स्याताम्, चस्य लुक् च । तुर्यः, तुरीयः ॥ १६४ ॥

द्वेस्तीयः । ७ । १ । १६५ ।

द्वेः संख्यापूरणे तीयः स्यात् । द्वितीयः ॥ १६५ ॥

त्रेस्तृ च । ७ । १ । १६६ ।

त्रेः संख्यापूरणे तीयः स्यात्, तद्योगे च तृ । तृतीयः॥

पूर्वमनेन साऽऽदेश्चेन् । ७ । १ । १६७ ।

१ बह्वीनां पूरणी बहुतिथी । पित्त्वाद् ङी । पित्वात् पुस्यपि, बहुतिथ ।

पूर्वमित्यमन्तात् केवलात् सपूर्वाच्चाऽनेनेति टाऽर्थे कर्त्तरि इन् स्यात् । कृतपूर्वी कटम्, पीतपूर्वी पयः ॥१६७॥

इष्टाऽऽदेः । ७ । १ । १६८ ।

एभ्योऽर्थात् स्यन्तेभ्यष्टाऽर्थे कर्त्तरीन् स्यात् । इष्टी यज्ञे, पूर्त्ती श्राद्धे ॥ १६८ ॥

श्राद्धमद्यभुक्तमिकेनौ । ७ । १ । १६९ ।

श्राद्धात् स्यन्तादद्यभुक्ताद्यर्थे कर्त्तर्येतौ स्याताम् । श्राद्धिकः, श्राद्धी ॥ १६९ ॥

अनुपद्यन्वेष्टा । ७ । १ । १७० ।

एष इन्नन्तो निपात्यते, अन्वेष्टा चेत् । अनुपदी गवाम् ॥ १७० ॥

दाण्डाजिनिकाऽऽयःशूलिक-पार्श्वकम् । ७ । १ । १७१ ।

एते यथायोगमिकण् -कान्ता निपात्याः, अन्वेष्टर्यर्थे । दाण्डाजिनिको दाम्भिकः, आयःशूलिकः तीक्ष्णोपायोऽर्थान्वेष्टा, पार्श्वकः अनृजूपायः स एव ॥ १७१ ॥

क्षेत्रेऽन्यस्मिन् नाश्ये इयः । ७ । १ । १७२ ।

क्षेत्रान्निर्देशात् ङ्यन्तादन्योपाधिकात् नाश्येऽर्थे इयः स्यात् । क्षेत्रियो व्याधिः, जारश्च ॥ १७२ ॥

छन्दोऽधीते. श्रोत्रश्च वा । ७ । १ । १७३ ।

अस्मादमन्तादधीतेऽर्थे इयो वा स्यात्, तद्योगे चास्य श्रोत्रः । श्रोत्रियः, छान्दसः ॥ १७३ ॥

इन्द्रियम् । ७ । १ । १७४ ।

---

१ अत्र "व्याप्ये क्तेन (२-२-९९) सूत्रात् सप्तमी । इष्टमनेन इष्टी यज्ञे इति विग्रहः ।

२ अत्र शरीरदारादिपरिग्रहणार्थकम् । अन्यस्मिन् क्षेत्रे नाश्य क्षेत्रियः ।

इन्द्राद् इयो निपात्यः । इन्द्रस्य लिङ्गमिन्द्रियम् ॥

तेन वित्ते चञ्चु-चणौ । ७ । १ । १७५ ।

तेनेति टान्ताद् वित्तेऽर्थे एतौ स्याताम् । विद्याचञ्चुः, केशचणः ॥ १७५ ॥

पूरणाद् ग्रन्थस्य ग्राहके को लुक्चाऽस्य । ७ । १ । १७६ ।

पूरणप्रत्ययान्तात् टान्ताद् ग्रन्थस्य ग्राहकेऽर्थे कः स्यात्, तद्योगे च पूरणार्थस्य लुक् । द्विकः शिष्यः ॥

ग्रहणाद् वा । ७ । १ । १७७ ।

गृह्यतेऽनेनेति ग्रहणम् । रूपादिग्रन्थस्य ग्रहणार्थात् पूरणप्रत्ययान्तात् कः स्वार्थे स्यात्, तद्योगे च पूरणार्थस्य लुग् वा । द्विकं, द्वितीयकं वा ग्रन्थग्रहणम् ॥ १७७ ॥

सस्याद् गुणात् परिजाते । ७ । १ । १७८ ।

सस्याद् गुणार्थात् टान्तात् परिजातेऽर्थे कः स्यात् । सस्यकः शालिर्देशो वा। गुणादिति किम्? सस्येन परिजातं क्षेत्रम् ॥ १७८ ॥

धन-हिरण्ये कामे । ७ । १ । १७९ ।

आभ्यां ङ्यन्ताभ्यां कामेऽर्थे कः स्यात् । धनकः, हिरण्यको मैत्रस्य ॥ १७९ ॥

स्वाङ्गेषु सक्ते । ७ । १ । १८० ।

स्वाङ्गार्थेभ्यो ङ्यन्तेभ्यः सक्तेऽर्थे कः स्यात् । नखकः, केशनखकः, दन्तौष्ठकः ॥ १८० ॥

उदरे त्विकण् आद्यूने । ७ । १ । १८१ ।

१ सप्तम्यन्ताभ्याम् । एवमुत्तरत्राऽपि धने कामो धनको मैत्रस्य । कामोऽभिलाषः ।

अस्माद् ङयन्तात् सक्ते आद्यूनेऽर्थे इकण् स्यात्। औदरिकः, उदरकोऽन्यः॥ १८१॥

अंशं हारिणि । ७ । १ । १८२।

अंशादमन्तात् हारिण्यर्थे कः स्यात्। अंशको दायादः॥ १८२॥

तन्त्राद् अचिरोद्धृते । ७ । १ । १८३ ।

तन्त्रात् पञ्चम्यन्ताद् अचिरोद्धृतेऽर्थ कः स्यात्। तन्त्रकः पटः॥ १८३॥

ब्राह्मणात् नाम्नि । ७ । १ । १८४ ।

अस्मात् ङस्यन्तादचिरोद्धृतेऽर्थे कः स्यात्, नाम्नि। ब्राह्मणको नाम देशः॥ १८४॥

उष्णात् । ७ । १ । १८५ ।

उष्णात् ङस्यन्तादचिरोद्धृतेऽर्थे कः स्यात्, नाम्नि। उष्णिका यवागूः॥ १८५॥

शीताच्च कारिणि । ७ । १ । १८६ ।

शीतोष्णाभ्यामर्थादमन्ताभ्यां कारिण्यर्थे कः स्यात्, नाम्नि। शीतकोऽलसः, उष्णको दक्षः॥ १८६॥

अधेरारूढे । ७ । १ । १८७ ।

अधेरारूढार्थात् स्वार्थे कः स्यात्। अधिको द्रोणः खार्याः, अधिका खारी द्रोणेन॥ १८७॥

अनोः कमितरि । ७ । १ । १८८ ।

अनोः कः स्यात्, तदन्तश्चेत् कमितरि। अनुकः[1]॥

[1] अनुकामयतेऽनुकः। एवमुत्तरसूत्रे अभिकामयतेऽभीक इति विग्रह। दीर्घत्वञ्च।

## [1]अभेरीश्च वा । ७ । १ । १८९ ।

अभेः कः स्यात्, ईश्चाऽस्य वा, तदन्तश्चेत् कमितरि। अभिकः, अभीकः ॥ १८९ ॥

## सोऽस्य मुख्यः । ७ । १ । १९० ।

स इति स्यन्ताद् अस्येति षष्ठ्यर्थे कः स्यात्, स्यन्तं चेत् मुख्यार्थम् । देवदत्तकः सङ्घः ॥ १९० ॥

## शृङ्खलकः करभे । ७ । १ । १९१ ।

कान्तो निपात्यः। शृङ्खलकः करभ उष्ट्रशिशुः ॥१९१॥

## उदुत्सोरुन्मनसि । ७ । १ । १९२ ।

आभ्यामस्येति उन्मनस्यर्थे कः स्यात्। उत्कः, उत्सुकः॥

## [2]काल-हेतु-फलाद् रोगे । ७ । १ । १९३ ।

कालविशेषार्थेभ्यो, हेत्वर्थेभ्यः, फलार्थेभ्यश्च स्यन्तेभ्योऽस्येति रोगेऽर्थे कः स्यात् । द्वितीयको ज्वरः, पर्वतको रोगः, शीतको ज्वरः ॥ १९३ ॥

## प्रायोऽन्नमस्मिन् नाम्नि । ७ । १ । १९४ ।

स्यन्तादस्मिन्निति ङ्यर्थे संज्ञाविषये कः स्यात्, स्यन्तं चेदन्नं प्रायेण । गुडापूपिका पौर्णमासी ॥ १९४ ॥

## कुल्माषादण् । ७ । १ । १९५ ।

अस्मात् स्यन्तात् प्रायोऽन्नमस्मिन्नित्यर्थेऽण् स्यात्, नाम्नि । कौल्माषी, पौर्णमासी ॥ १९५ ॥

---

१ उद्गतं मनोऽस्य स उत्कः । उत्सुकं मनोऽस्य स उत्सुक उत्कण्ठित इत्यर्थः ।

२ द्वितीयो दिवस उत्पत्तिकालोऽस्य द्वितीयको ज्वरः । अंगेन तु पर्वतकः । हेतुः प्रयोजनम् । फलं परिणामः ।

वटकादिन् । ७ । १ । १९६ ।

अस्मात् स्यन्तात् प्रायोऽस्मिन्नित्यर्थे इन् स्यात् । वटकिनी पौर्णमासी ॥ १९६ ॥

साक्षाद् द्रष्टा । ७ । १ । १९७ ।

साक्षातो द्रष्टेत्यस्मिन्नर्थे इन् नाम्नि स्यात् । साक्षी॥

इत्याचार्यहेमचन्द्रविरचितायां सिद्धहेमचन्द्राभिधानस्वोपज्ञशब्दानुशासनलघुवृत्तौ सप्तमस्याध्यायस्य प्रथमः पादः समाप्तः ॥ ७ । १ ॥



## ॥ द्वितीयः पादः ॥

### तदस्याऽस्त्यस्मिन्निति मतुः । ७ । २ । १ ।

तदिति स्यन्ताद्, अस्येति षष्ठ्यर्थेऽस्मिन्निति ङ्यर्थे वा मतुः स्यात्, चेत् स्यन्तमस्तीति। गोमान्, वृक्षवान् गिरिः। अस्तीति किम् ? गावोऽस्याऽऽसन्। इतः प्रायो भूमादौ मत्वादयः ॥ १ ॥

### आ यात् । ७ । २ । २ ।

"रूपात् प्रशस्ताऽऽहतात्" (७-२-५४) इति आ य-विधेर्वक्ष्यमाणप्रकृतिभ्यो मतुः स्यात्, तदस्यास्ति तदस्मिन्नस्तीतिविषये। कुमारीमान्, व्रीहिमान् ॥ २ ॥

### नावादेरिकः । ७ । २ । ३ ।

एभ्यो मत्वर्थे इकः स्यात्। नाविकः, नौमान्। एवं कुमारिकः, कुमारीमान् ॥ ३ ॥

### शिखाऽऽदिभ्य इन् । ७ । २ । ४ ।

एभ्यो मत्वर्थे इन् स्यात्। शिखी, शिखावान्। माली, मालावान् ॥ ४ ॥

### व्रीह्यादिभ्यस्तौ । ७ । २ । ५ ।

एभ्यो मत्वर्थे इकेनौ स्याताम्। व्रीहिकः, व्रीही, व्रीहिमान्, मायिकः, मायी, मायावान् ॥ ५ ॥

---

१ अस्तिकथनाद् वर्तमानसत्तायामेव प्रत्ययो भवति, न भूतभविष्यत्सत्तायाम्। गोमांश्री गावो वाऽस्य भविष्यन्ति इति वा गोमान् इति प्रत्ययो न, गोमान् गिरिरिति च अस्तिविवक्षायामुदाहरणम्। भूमादिष्वर्थेषु मतु इत्-इत्यादयः प्रत्ययाः स्युः। यदुक्तम्—

भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने ।
संसर्गेऽस्तिविवक्षायां प्रायो मत्वादयो मताः ॥

## अतोऽनेकस्वरात् । ७ । २ । ६ ।

अदन्तादनेकस्वरात् मत्वर्थे इकेनौ स्याताम् । दण्डिकः, दण्डी, दण्डवान्, छत्रिकः, छत्री, छत्रवान् । अनेकस्वरादिति किम्? खवान् ॥ ६ ॥

## आशिरसोऽशीर्षश्च । ७ । २ । ७ ।

अस्मात् मत्वर्थे इकेनौ स्याताम्, मतुश्च, तद्योगे चास्याशीर्षः । अशीर्षिकः, अशीर्षी, अशीर्षवान् ॥ ७ ॥

## [1]अर्थाऽर्थाऽन्ताद् भावात् । ७ । २ । ८ ।

अर्थादर्थान्ताच्च भावार्थादेव मत्वर्थे इकेनावेव स्याताम् । अर्थिकः, अर्थी, प्रत्यर्थिकः, प्रत्यर्थी । मतुर्न स्यात् । भावादिति किम्? धनार्थात् मतुरेव, अर्थवान् ॥ ८ ॥

## व्रीह्यर्थ-तुन्दाऽऽदेरिलश्च । ७ । २ । ९ ।

आभ्यां मत्वर्थे इल इकेनौ च स्युः । शालिलः, शालिकः, शाली, शालिमान्, तुन्दिलः, तुन्दिकः, तुन्दी, तुन्दिवान्, उदरिलः, उदरिकः, उदरी, उदरवान् ॥ ९ ॥

## स्वाङ्गाद् विवृद्धात् ते । ७ । २ । १० ।

अस्मात् मत्वर्थे इलेकेनाः स्युः । कर्णिलः, कर्णिकः, कर्णी, कर्णवान् ॥ १० ॥

## वृन्दादारकः । ७ । २ । ११ ।

---

१ भावार्थप्रत्ययान्तादर्थशब्दात् तदन्ताच्च शब्दात् इक-इनौ स्त, न मत । अयनमर्थ इति भावप्रत्ययान्तोऽर्थशब्द । ततोऽर्थोऽस्यास्ति सोऽर्थी उपयाचनावान् इत्यर्थः । प्रत्यर्थी इत्यर्थान्तस्योदाहरणम् । धनादिवाचकाद् अर्थशब्दात् नेनौ स्त, किन्तु मतुरेव स्यात्, अर्थवान् इति । मवन्तात् पुनर्न मतुर्भवति । उक्तं च—

शैषिकात् शैषिको नेष्ट सरूप प्रत्यय क्वचित्,
समानवृत्तौ मत्वर्थात् मत्वर्थीयाऽपि नेष्यते ॥

विवृद्धात् महत । ते पूर्वोक्ता इल-इक-इन-मतु प्रत्यया ।

मत्वर्थे स्यात् । वृन्दारकः, वृन्दवान् ॥ ११ ॥

### शृङ्गात् । ७ । २ । १२ ।

मत्वर्थे आरकः स्यात् । शृङ्गारकः, शृङ्गवान् ॥ १२ ॥

### फल-बर्हात् चेनः । ७ । २ । १३ ।

आभ्यां शृङ्गाच्च मत्वर्थे इनः स्यात् । फलिनः, फलवान्, बर्हिणः, शृङ्गिणः ॥ १३ ॥

### मलाद् ईमसश्च । ७ । २ । १४ ।

मलात् मत्वर्थे ईमस इनश्चस्यात् । मलीमसः, मलिनः, मलवान् ॥ १४ ॥

### मरुत्-पर्वणस्तः । ७ । २ । १५ ।

आभ्यां मत्वर्थे तः स्यात् । मरुत्तः, मरुत्वान्, पर्वतः, पर्ववान् ॥ १५ ॥

### वलि-वटि-तुण्डेर्भः । ७ । २ । १६ ।

एभ्यो मत्वर्थे भः स्यात् । वलिभः, वटिभः, तुण्डिभः, वलिवान् ॥ १६ ॥

### ऊर्णा-हं-शुभमो युस् । ७ । २ । १७ ।

एभ्यो मत्वेऽर्थे युः स्यात् । ऊर्णायुः, अहंयुः, शुभंयुः ॥

### कं-शंभ्यां युस्-ति-यस्-तु-त-व-भम् ।७।२।१८।

आभ्यां मत्वर्थे एते स्युः । कंयुः, शंयुः, कंतिः, शंतिः, कंयः, शंयः, कंतुः, शंतुः, कंतः, शंतः, कंवः, शंवः, कंभः, शंभः ॥ १८ ॥

---

१ सिद्धान्तकौमुद्यां बकारस्थाने मकारो लिखितः । विकल्पेन पर वर्णो भवति । तेन कंतिः, कन्तिरित्यादि स्यात् । शान्तस्य च शंयुः, पर्तुं वर, ययवे त्वनुस्वारस्थाने क्रमशः वर्णो भवति "तो सुमो..." इति सूत्रात् ।

वल-वात-दन्त-ललाटादूलः । ७ । २ । १९ ।

एभ्यो मत्वर्थे ऊलः स्यात् । बलूलः, वातूल, दन्तुलः, ललाटूलः, बलवान् ॥ १९ ॥

प्राण्यङ्गादातो लः । ७ । २ । २० ।

प्राण्यङ्गार्थाद् आदन्तात् मत्वर्थे लः स्यात् । चूडालः, चूडावान् । प्राण्यङ्गादिति किम् ? जङ्घावान् प्रासादः॥२०॥

सिध्माऽऽदि-क्षुद्रजन्तु-रुग्भ्यः । ७ । २ । २१ ।

सिध्मादेः, क्षुद्रजन्त्वर्थाद् रुगर्थाच मत्वर्थे लः स्यात् । सिध्मलः, सिध्मवान्, वर्ष्मलः, यूकालः, मूर्च्छालः॥ २१ ॥

प्रज्ञा-पर्णोदक-फेनात् लेलौ । ७ । २ । २२ ।

एभ्यो मत्वर्थे लेलौ स्याताम् । प्रज्ञालः, प्रज्ञिलः, पर्णलः, पर्णिलः, उदकलः, उदकिलः, फेनलः, फेनिलः, फेनवान् ॥ २२ ॥

काला-जटा-घाटात् क्षेपे । ७ । २ । २३ ।

एभ्यो मत्वर्थे लेलौ स्याताम्, क्षेपे गम्ये । कालालः, कालिलः, जटालः, जटिलः, घाटालः, घाटिलः । क्षेपे इति किम् ? कालावान् ॥ २३ ॥

वाच आलाऽऽटौ । ७ । २ । २४ ।

मत्वर्थे स्याताम्, क्षेपे गम्ये । वाचालः, वाचाटः ॥२४ ॥

ग्मिन् । ७ । २ । २५ ।

वाचो मत्वर्थे ग्मिन् स्यात् । वाग्मी, वाग्वान् ॥ २५ ॥

मध्वादिभ्यो रः । ७ । २ । २६ ।

---

१ कुत्सितभाषिणि एतौ स्याताम्, प्रशंसायां तु "ग्मिन्" सूत्राद् वाग्मी, वाग्वान् वा स्यादित्यर्थः ।

मत्वर्थे रः स्यात् । मधुरो रसः, खरो गर्दभः ॥ २६ ॥

## ¹कृष्यादिभ्यो वलच् । ७ । २ । २७ ।

मत्वर्थे स्यात् । कृषीवलः कुटुम्बी, आसुतीवलः कल्यपालः, आसुतिमान् ॥ २७ ॥

## लोम-पिच्छाऽऽदेः शेलम् । ७ । २ । २८ ।

लोमादेः पिच्छादेश्च मत्वर्थे यथासङ्ख्यं श इलश्च स्यात् । लोमशः, लोमवान्, गिरिशः, पिच्छिलः, पिच्छवान्, उरसिलः ॥ २८ ॥

## नोऽङ्गाऽऽदेः । ७ । २ । २९ ।

एभ्यो मत्वर्थे नः स्यात् । अङ्गना चार्वङ्गी स्त्री, पामनः, पामवान् ॥ २९ ॥

## शाकी-पलाली-दद्र्वा ह्रस्वश्च । ७ । २ । ३० ।

एभ्यो मत्वर्थे नः स्यात्, तद्योगे चैषां ह्रस्वः । ²महच्छाकं पलालं च शाकी, पलाली, दद्रुर्व्याधिः, शाकिनः, शाकीमान्, पलालिनः, दद्रुणः ॥ ३० ॥

## विष्वचो विषुश्च । ७ । २ । ३१ ।

अस्मात् मत्वर्थे नः स्यात्, विषुश्चास्य । विषुणः रविर्वायुर्वा, विष्वग्वान् ॥ ३१ ॥

## लक्ष्म्या अनः । ७ । २ । ३२ ।

मत्वर्थे स्यात् । लक्ष्मणः, लक्ष्मीवान् ॥ ३२ ॥

---

१ "वलच्यपित्रादेः" सूत्राद् दीर्घः स्यात्। एवं दन्तावलरजस्वलादयः। ऊर्जस्वलस्तु "ऊर्जो विनवलः.." (७-२-५१) सूत्राद् भवति।

२ महच्छाकं शाकी इत्युच्यते। महत्पलालं च पलालीति भण्यते।

प्रज्ञा-श्रद्धाऽर्चा-वृत्तेर्णः । ७ । २ । ३३ ।

एभ्यो मत्वर्थे णः स्यात् । प्राज्ञः, प्रज्ञावान् , श्राद्धः, श्रद्धावान् , आर्चः, अर्चावान् , वार्त्तः, वृत्तिमान् ॥३३॥

ज्योत्स्नाऽऽदिभ्योऽण् । ७ । २ । ३४ ।

मत्वर्थेऽण् स्यात् । ज्योत्स्नी रात्रिः, तामिस्री ॥३४॥

सिकता-शर्करात् । ७ । २ । ३५ ।

आभ्यां मत्वर्थेऽण् स्यात् । सैकतः, सिकतावान्, शार्करः ॥ ३५ ॥

इलश्च देशे । ७ । २ । ३६ ।

सिकताशर्कराभ्यां देशे मत्वर्थे इलाणौ स्याताम् । सिकतिलः, सैकतः, सिकतावान् , शर्करिलः, शार्करो देशः, शर्करावान् ॥ ३६ ॥

द्यु-द्रोर्मः । ७ । २ । ३७ ।

आभ्यां मत्वर्थे मः स्यात् । द्युमः, द्रुमः ॥ ३७ ॥

काण्डाऽऽण्ड-भाण्डाद् ईरः । ७ । २ । ३८ ।

एभ्यो मत्वर्थे ईरः स्यात् । काण्डीरः, काण्डवान् , आण्डीरः, भाण्डीरः ॥ ३८ ॥

कच्छ्वा डुरः । ७ । २ । ३९ ।

मत्वर्थे स्यात् । कच्छुरः, कच्छूमान् ॥ ३९ ॥

दन्तादुन्नतात् । ७ । २ । ४० ।

उन्नत्युपाधेर्दन्तात् मत्वर्थे डुरः स्यात् । दन्तुरः । उन्नतादिति किम् ? दन्तवान् ॥ ४० ॥

मेधा-रथात् नवेरः । ७ । २ । ४१ ।

आभ्यां मत्वर्थे इरो वा स्यात्। मेधिरः, मेधावान्, मेधावी। रथिरः, रथिकः, रथी ॥ ४१ ॥

कृपा-हृदयादालुः । ७ । २ । ४२ ।

आभ्यां मत्वर्थे वाऽऽलुः स्यात्। कृपालुः, कृपावान्। हृदयालुः, हृदयी ॥ ४२ ॥

केशाद्वः । ७ । २ । ४३ ।

मत्वर्थे वो वा स्यात्। केशवः, केशवान्, केशी ॥

मण्यादिभ्यः । ७ । २ । ४४ ।

एभ्यो मत्वर्थे वः स्यात्। मणिवः, मणिमान्, हिरण्यवः, हिरण्यवान् ॥ ४४ ॥

हीनात् स्वाङ्गादः । ७ । २ । ४५ ।

हीनत्वोपाधेः स्वाङ्गार्थात् मत्वर्थे अः स्यात्। कर्णः। हीनादिति किम्? कर्णवान् ॥ ४५ ॥

अभ्राऽऽदिभ्यः । ७ । २ । ४६ ।

एभ्यो मत्वर्थे अः स्यात्। अभ्रं नभः, अर्शसो मत्रः॥

अस्-तपस्-माया-मेधा-स्रजो विन् ।७।२।४७।

असन्तात्, तपसादेश्च मत्वर्थे विन् स्यात्। यशस्वी, यशस्वान्, तपस्वी, मायावी, मायावान्, मेधावी, स्रग्वी ॥ ४७ ॥

आमयाद् दीर्घश्च ७ । २ । ४८ ।

अस्मात् मत्वर्थे विन् स्यात्, दीर्घश्चास्य। आमयावी, आमयवान् ॥ ४८ ॥

---

१ [illegible]

स्वात् मिन् ईशे । ७ । २ । ४९ ।

स्वात् मत्वर्थ ईशे मिन् स्यात्, दीर्घश्चास्य । स्वामी। स्ववान् अन्यः ॥ ४९ ॥

गोः । ७ । २ । ५० ।

गोर्मत्वर्थे मिन् स्यात् । गोमी, गोमान् ॥ ५० ॥

ऊर्जो विन्-वलावस् चान्तः । ७ । २ । ५१ ।

ऊर्जो मत्वर्थे विन्वलौ स्याताम्, तद्योगे चोर्जोऽसन्तः । ऊर्जस्वी, ऊर्जस्वलः, ऊर्ज्वान् ॥ ५१ ॥

तमिस्राऽर्णव-ज्योत्स्नाः । ७। २ । ५२ ।

एते मत्वर्थे निपात्याः । तमिस्रा रात्रिः, तमिस्राणि गुहामुखानि, तमस्वान्, अर्णवः समुद्रः, ज्योत्स्ना चन्द्रप्रभा ॥ ५२ ॥

गुणाऽऽदिभ्यो यः । ७ । २ । ५३ ।

एभ्यो मत्वर्थे यः स्यात् । गुण्यो[1] ना, हिम्यो गिरिः, हिमवान् ॥ ५३ ॥

रूपात् प्रशस्ताऽऽहतात् । ७ । २ । ५४ ।

प्रशस्तोपाधेराहतोपाधेश्च रूपात् मत्वर्थे यः स्यात् । रूप्यो गौः, रूप्यं कार्षापणम्, रूपवान् अन्यः ॥ ५४ ॥

पूर्णमासोऽण्[2] । ७ । २ । ५५ ।

मत्वर्थे स्यात् । पौर्णमासी ॥ ५५ ॥

गोपूर्वादत इकण् । ७ । २ । ५६ ।

---

१ गुणीत्यत्र "शाखादिभ्य इन्" सूत्रेण इन् भवति। गुणादिराकृतिगण ।

२ पूर्णो मा-चन्द्रोऽस्यामिति पौर्णमासी । अणन्तत्वाद् ङीबिति ।

गोपूर्वाददन्तात् मत्वर्थे इकण् स्यात् । गौशतिकः । अत इति किम् ? गोविंशतिमान् ॥ ५६ ॥

निष्काऽऽदेः शतसहस्रात् । ७ । २ । ५७ ।

निष्काद्यवयवात् परं यत् शतं सहस्रं च तदन्तात् मत्वर्थे इकण् स्यात् । नैष्कशतिकः, नैष्कसहस्त्रिकः । आदेरिति किम् ? स्वर्णनिष्कशतमस्यास्ति ॥ ५७ ॥

एकाऽऽदेः कर्मधारयात् । ७ । २ । ५८ ।

*अस्माददन्तात् मत्वर्थे इकण् स्यात् । ऐकगविकः ॥*

सर्वाऽऽदेरिन् । ७ । २ । ५९ ।

सर्वाऽऽदेरदन्तात् कर्मधारयाद् इन् स्यात् । सर्वधनी ॥ ५९ ॥

प्राणिस्थादस्वाङ्गाद् द्वन्द्व-रुग्-नि-न्द्यात् । ७ । २ । ६० ।

प्राणिस्थोऽस्वाङ्गार्थोऽदन्तो यो द्वन्द्वो, यश्च रुग्वाची, निन्द्यार्थश्च तस्मात् मत्वर्थे इन् स्यात् । कटकवलयिनी, कुष्ठी, ककुदावर्त्ती प्राणिस्थादिति किम् ? पुष्पफलवान् वृक्षः । अस्वाङ्गादिति किम् ? स्तनकेशवती ॥६०॥

वाताऽतीसार-पिशाचात् कश्चान्तः ।७।२।६१।

एभ्यो मत्वर्थे इन् स्यात्, कश्चान्तः । वातकी, अतिसारकी, पिशाचकी ॥ ६१ ॥

पूरणाद् वयसि । ७ । २ । ६२ ।

पूरणप्रत्ययान्ताद् वयसि गम्ये मत्वर्थे इन्नेव स्यात् । पञ्चमो बालः ॥ ६२ ॥

---

१ पञ्चमो मासो वर्षो वाऽस्यास्तीति पञ्चमी बाल । इमन्तस्य दण्डिवद्रूपाणि स्यु ।

सुखाऽऽदेः । ७ । २ । ६३ ।

एभ्यो मत्वर्थे इन् एव स्यात् । सुखी, दुःखी ॥६३॥

मालायाः क्षेपे । ७ । २ । ६४ ।

मत्वर्थे इन्नेव स्यात् । माली । क्षेप इति किम् ? मालावान् ॥ ६४ ॥

धर्म्म-शील-वर्णान्तात् । ७ । २ । ६५ ।

धर्माद्यन्तात् मत्वर्थे इन्नेव स्यात् । मुनिधर्मी, यतिशीली, ब्राह्मणवर्णी ॥ ६५ ।

बाहूर्वादेर्बलात् ।७ । २ । ६६ ।

बाहूरुपूर्वाद् बलात् मत्वर्थे इन्नेव स्यात् । बाहुबली, ऊरुबली ॥ ६६ ॥

मन्-माऽब्जाऽऽदेर्नाम्नि । ७ । २ । ६७ ।

मन्नन्तात् मान्तेभ्योऽब्जादेश्च मत्वर्थे इन्नेव स्यात्, नाम्नि ।-दामिनी, सोमिनी, अब्जिनी, कमलिनी ॥

हस्त-दन्त-करात् जातौ । ७ । २ । ६८ ।

एभ्यो मत्वर्थे इन्नेव स्यात्, एतदन्तस्य जातावर्थे । हस्ती, दन्ती, करी ॥ ६८ ॥

वर्णात् ब्रह्मचारिणि । ७ । २ । ६९ ।

वर्णात् मत्वर्थे इन्नेव स्यात्, चेद् ब्रह्मचार्यर्थः । वर्णी ब्रह्मचारीत्यर्थः । वर्णवानन्यः ॥ ६९ ॥

पुष्कराऽऽदेर्देशे । ७ । २ । ७० ।

एभ्यो मत्वर्थे इन्नेव स्यात्, देशेऽर्थे । पुष्करिणि, पद्मिनी । देश इति किम् ? पुष्करवान् हस्ती ॥ ७० ॥

सूक्त-साम्नोरीयः । ७ । २ । ७१ ।

सूक्ते साम्नि चार्थे मत्वर्थे ईयः स्यात्। अच्छावाकीयं सूक्तम्, यज्ञायज्ञीयं साम ॥ ७१ ॥

### लुप् वाऽध्यायाऽनुवाके । ७ । २ । ७२ ।

अनयोर्मत्वर्थे ईयस्य लुप् वा स्यात्, लुब्विधेरेवेयः। गर्दभाण्डः, गर्दभाण्डीयोऽध्यायोऽनुवाको वा ॥ ७२ ॥

### विमुक्ताऽऽदेरण् । ७ । २ । ७३ ।

एभ्यो मत्वर्थेऽध्यायानुवाकयोरण् स्यात्। वैमुक्तः, दैवासुरः अध्यायोऽनुवाको वा ॥ ७३ ॥

### घोषदादेरकः । ७ । २ । ७४ ।

एभ्यो मत्वर्थेऽध्यायानुवाकेऽकः स्यात्। घोषदकः, गोपदकोऽध्यायादिः ॥ ७४ ॥

### प्रकारे जातीयर् । ७ । २ । ७५ ।

स्यन्तात् षष्ठ्यर्थेऽयं स्यात्, चेत् स्यन्तं प्रकारार्थम्। सामान्यस्य विशेषोऽविशेषान्तरानुयायी प्रकारः। पटुजातीयः ॥ ७५ ॥

### कोऽण्वादेः । ७ । २ । ७६ ।

एभ्यस्तदस्य प्रकार इतिविषये कः स्यात्। अणुकः, स्थूलकः पटः ॥ ७६ ॥

### जीर्ण-गोमूत्राऽवदात-सुरा-यव-कृष्णात् शाल्या-च्छादन-सुराऽहि-व्रीहि-तिले ।७।२।७७।

एभ्यो यथासङ्ख्यमेष्वर्थेषु तदस्य प्रकार इतिविषये कः स्यात्। जीर्णकः शालिः, गोमूत्रक आच्छादनम्, अवदातिका सुरा, सुरकोऽहिः, यवको व्रीहिः, कृष्णकास्तिलाः ॥ ७७ ॥

भूतपूर्वे प्चरट् । ७ । २ । ७८ ।

पूर्वार्थात् स्वार्थे प्चरट् स्यात् । आढ्यचरी ॥७८॥

गोष्ठाद् ईनञ् । ७ । २ । ७९ ।

भूतपूर्वे स्यात् । गौष्ठीनो देशः ॥ ७९॥

षष्ठ्या रूप्य-प्चरट् । ७ । २ । ८० ।

भूतपूर्वेऽर्थे एतौ स्याताम् । मैत्ररूप्यो गौः, मैत्रचरः॥

व्याश्रये तसुः । ७ । २ । ८१ ।

षष्ठ्यन्तात् नानापक्षाश्रये गम्ये तसुः स्यात् । देवा अर्जुनतोऽभवन् , रविः कर्णतोऽभवत् ॥ ८१ ॥

रोगात् प्रतीकारे । ७ । २ । ८२ ।

षष्ठ्यन्ताद् रोगार्थादपनयने तसुः स्यात् । प्रवाहिकातः कुरु । ८२ ॥

पर्यभेः सर्वोभये । ७ । २ । ८३ ।

आभ्यां यथासङ्ख्यं सर्वोभयार्थाभ्यां तसुः स्यात् । परितः, अभितः । सर्वोभय इति किम् ? वृक्षं परि, अभि वा ॥ ८३ ॥

आद्यादिभ्यः । ७ । २ । ८४ ।

एभ्यः सम्भवत्स्याद्यन्तेभ्यस्तसुः स्यात् । आदितः, मध्यतः ॥ ८४ ॥

क्षेपाऽतिग्रहाऽव्यथेष्वकर्त्तुस्तृतीयायाः । ७ । २ । ८५ ।

१ अतः परं प्रायः स्वार्थिकाः प्रत्ययाः सन्ति। पूर्वं भूतो भूतपूर्वः । भूतपूर्वाऽऽढ्या आढ्यचरी । पकारानुबन्धः पुंवद्भावार्थः, टित्त्वात् स्त्रियां ङीः ।

दान्तादकर्त्रर्थात् क्षेपादिविषये तसुः स्यात्। वृत्ततः क्षिप्तोऽतिग्राह्यो न व्यथते वा। अकर्त्तुरिति किम्? मैत्रेण क्षिप्तः॥ ८५॥

पाप-हीयमानेन। ७। २। ८६।

आभ्यां योगे दान्तादकर्त्तुस्तसुः स्यात्। वृत्ततः पापो हीयते वा॥ ८६॥

प्रतिना पञ्चम्याः। ७। २। ८७।

प्रतिना योगे जातपञ्चम्यन्तात् तसुर्वा स्यात्। अभिमन्युरर्जुनाद्, अर्जुनतो वा प्रति॥ ८७॥

अहीय-रुहोऽपादाने। ७। २। ८८।

अपादानपञ्चम्यन्तात् तसुर्वा स्यात्, न चेत् तत् हीय-रुहोः। ग्रामाद् ग्रामतो वैति। अहीयरुह इति किम्? सार्थाद् हीनो गिरेरवरोहति॥८८॥

किमद्व्यादिसर्वाद्यवैपुल्यबहोः पित्
तस्। ७। २। ८९।

किमोऽद्वयादिवर्जसर्वादिभ्योऽवैपुल्यार्थबहोश्च ङस्यन्तात् तस् पित् स्यात्। कुतः, सर्वतः, यतः, बहुतः। द्वयादिवर्जनं किम्? द्वाभ्याम्, त्वत्। अवैपुल्येति किम्? बहोः सूपात्॥ ८९॥

इतोऽतः कुतः । ७ । २ । ९० ।

एते तसन्ता निपात्याः ॥ ९० ॥

भवत्वायुष्मद्-दीर्घाऽऽयुष्-देवानांप्रियैकार्थात् । ७ । २ । ९१ ।

भवत्वाद्यैस्तुल्याधिकरणात् किमद्व्यादिसर्वाद्यवैपुल्यबहोः सर्वस्याद्यन्तात् पित् तस् वा स्यात् । स भवान्, ततो भवान् । ते भवन्तः, ततो भवन्तः । स आयुष्मान्, तत आयुष्मान् । स दीर्घायुः, ततो दीर्घायुः । तं देवानांप्रियम्, ततो देवानांप्रियम् ॥ ९१ ॥

त्रप् च । ७ । २ । ९२ ।

भवत्वाद्यैरेकार्थात् किमद्व्यादिसर्वाद्यवैपुल्यबहोः सर्वस्याद्यन्तात् त्रप् च वा स्यात् । स भवान्, तत्र भवान्, ततो भवान् । तस्मिन् भवति, तत्र भवति, ततो भवति । आयुष्मदादिनाऽप्येवम् ॥ ९२ ॥

क-कुत्राऽत्रेह । ७ । २ । ९३ ।

एते त्रपन्ता निपात्याः ॥ ९३ ॥

सप्तम्याः । ७ । २ । ९४ ।

सप्तम्यन्तात् किमद्व्यादिसर्वाद्यवैपुल्यबहोः त्रप् स्यात् । कुत्र, सर्वत्र, तत्र, बहुत्र ॥ ९४ ॥

किम्-यत्-तत्-सर्वैकाऽन्यात् काले दा । ७ । २ । ९५ ।

---

१ अय तस् प्रथमाऽऽदिमत्तविभक्त्यन्तस्य नामस्य स्यात् । एव त्रपि । स्न सन भवता तता भवन्ता, तस्य भवत, तत्र भवन, ततो भवन इति सप्तस्वपि ।

एभ्यो ङ्यन्तेभ्यः कालेऽर्थे दा स्यात् । कदा, यदा, तदा, सर्वदा, एकदा, अन्यदा ॥ ९५ ॥

सदाऽधुनेदानीं-तदानीमेतर्हि । ७ । २ । ९६ ।

एते कालेऽर्थे निपात्याः ॥ ९६ ॥

सद्योऽद्य-परेद्यव्यह्नि । ७ । २ । ९७ ।

एतेऽह्नि काले निपात्याः ॥ ९७ ॥

पूर्वाऽपराऽधरोत्तराऽन्याऽन्यतरेतराद्

एद्युस् । ७ । २ । ९८ ।

एभ्यो ङ्यन्तेभ्योऽह्नि कालेऽर्थे एद्युस् स्यात् । पूर्वेद्युः, अपरेद्युः, अधरेद्युः, उत्तरेद्युः, अन्येद्युः, अन्यतरेद्युः, इतरेद्युः ।

उभयाद् द्युस् च । ७ । २ । ९९ ।

अतोऽह्न्यर्थे द्युस्-एद्युसौ स्याताम् । उभयद्युः, उभयेद्युः ॥ ९९ ॥

ऐषमः-परुत्-परारि वर्षे । ७ । २ । १०० ।

एते वत्सरेऽर्थे निपात्याः । ऐषमः, परुत्, परारि ॥

अनद्यतने र्हिः । ७ । २ । १०१ ।

ङ्यन्तादनद्यतनकालार्थाद् यथासम्भवं किमद्व्यादि-सर्वाद्यवैपुल्यबहोः र्हिः स्यात् । कर्हि, यर्हि, अमुर्हि, बहुर्हि । १०१

प्रकारे था । ७ । २ । १०२ ।

---

१ गतसम्वत्सरात् स्यनुवर्तन । अस्मिन् व. ऐषम । पूर्वस्मिन् वर्षे परुत् । पूर्वतरे परारि स्यात् ।

प्रकारार्थात् सम्भवत्स्याद्यन्तात् किमड्यादिसर्वाद्यवैपुल्यबहोर्था स्यात् । सर्वथा, अन्यथा ॥ १०२ ॥

कथमित्थम् । ७ । २ । १०३ ।

एतौ प्रकारे निपात्यौ ॥ १०३ ॥

सङ्ख्याया धा । ७ । २ । १०४ ।

सङ्ख्याऽर्थात् प्रकारवृत्तेर्धा वा स्यात् । एकधा। कतिधा ॥ १०४ ॥

विचाले च । ७ । २ । १०५ ।

एकस्याऽनेकीभावोऽनेकस्य चैकीभावो विचालः । तस्मिन् गम्ये सङ्ख्यार्थाद् धा वा स्यात् । एको राशिर्द्विधा वा क्रियते, अनेकमेकमेकधा वा करोति ॥१०५॥

वैकाद् ध्यमञ् । ७ । २ । १०६ ।

एकेतिसङ्ख्यार्थात् प्रकारवृत्तेर्विचाले च गम्ये ध्यमञ् वा स्यात् । ऐकध्यम्, एकधा भुङ्क्ते, अनेकमेकं करोति ऐकध्यं, एकधा वा करोति ॥ १०६ ॥

द्वि-त्रेर्धमञेधा वा । ७ । २ । १०७ ।

[1]आभ्यां प्रकारार्थाभ्यां, विचाले च गम्ये एतौ वा स्याताम्। द्वैधम्, त्रैधम्। द्वेधा, त्रेधा। द्विधा, त्रिधा भुङ्क्ते। एकराशिं द्वौ करोति द्वैधम्, त्रैधम्। द्वेधा, त्रेधा द्विधा, त्रिधा करोति ॥ १०७ ॥

तद्वति धण् । ७ । २ । १०८ ।

द्वित्रिभ्यां प्रकारवति विचालवति चार्थे धण् स्यात् । द्वैधानि, त्रैधानि ॥ १०८ ॥

१ धमञ्-एधाङ्वेतौ प्रत्ययौ वा स्तः । आभ्यां प्रकाराभ्यां द्वैध द्वेधा । वाक्यनाद धाऽपि, द्विरुक्त्यादि।

वारे कृत्वस् । ७ । २ । १०९ ।

वारवृत्तेः सङ्ख्यार्थाद् वारवति धात्वर्थे कृत्वस् स्यात् । पञ्चकृत्वो भुङ्क्ते ॥ १०९ ॥

द्वि-त्रि-चतुरः सुच् । ७ । २ । ११० ।

एभ्यो वारार्थेभ्यस्तद्वति सुच् स्यात् । द्विः, त्रिः, चतुः भुङ्क्ते ॥ ११० ॥

एकात् सकृच्चास्य । ७ । २ । १११ ।

अस्माद् वारार्थात् तद्वति सुच् स्यात्, सकृच्चाऽस्य । सकृद् भुङ्क्ते ॥ १११ ॥

बहोर्धाऽऽसन्ने । ७ । २ । ११२ ।

बहोः सङ्ख्यार्थाददूरवारार्थात् तद्वति धा स्यात् बहुधा भुङ्क्ते ॥ ११२ ॥

दिक्शब्दाद् दिग्-देश-कालेषु प्रथमा-पञ्चमी-सप्तम्याः । ७ । २ ११३ ।

दिशि दृष्टाद् दिगाद्यर्थात् सि-ङसि-ङ्यन्तात् स्वार्थे धा स्यात्। प्राची दिग् रम्या प्राग्रम्यम्, प्राग् देशः कालो वा रम्यः प्राग्रम्यम् , प्राच्या दिशो देशकालाभ्यां वा आगतः प्रागागतः, प्राच्यां दिशि देशकालयोर्वा वासः प्राग्वासः ॥ ॥ ११३ ॥

ऊर्ध्वाद् रि-रिष्टातौ उपश्चास्य । ७ । २ । ११४ ।

ऊर्ध्वाद् दिग्देशकालार्थात् सि-ङसि-ङ्यन्तादेतौ स्याताम्, उपश्चोर्ध्वस्य । उपरि, उपरिष्टात् रम्यं आगतो वासो वा ॥

पूर्वाऽवराऽधरेभ्योऽसस्तातौ, पुर्-अव्-अध-

---

१ अत्र "लुबञ्चेः" सूत्रात् धाप्रत्ययस्य लुप् स्यात् । लुपि ईलुप् च।

श्रैषाम् । ७ । २ । ११५ ।

एभ्यो दिग्देशकालार्थेभ्यः सिद्धसिद्धयन्तेभ्योऽस्,
अस्तात् च स्यात्, एषां च यथासङ्ख्यं पु...., अव्, अध् च।
पुरः, अवः, अधः, पुरस्तात्, अवस्तात्, अधस्तात् रम्य-
मागतो वासो वा ॥ ११५ ॥

पराऽवरात् स्तात् । ७ । २ । ११६ ।

आभ्यां दिगाद्यर्थाभ्यां प्रथमाद्यन्ताभ्यां स्वार्थे स्तात्
स्यात् । परस्तात्, अवरस्तात् रम्यमागतो वासो वा ॥ ११६ ॥

दक्षिणोत्तरात् चातस् । ७ । २ । ११७ ।

आभ्यां पराचराभ्यां च दिगाद्यर्थाभ्यां प्रथमाद्यन्ता-
भ्यां स्वार्थेऽतस् स्यात् । दक्षिणतः, उत्तरतः, परतः, अव-
रतो रम्यमागतो वासो वा ॥ ११७ ॥

अधराऽपरात् चाऽऽत् । ७ । २ । ११८ ।

आभ्यां दक्षिणोत्तराभ्यां च दिगाद्यर्थाभ्यां प्रथमाद्य-
न्ताभ्यामात् स्यात् । अधरात्, पश्चात्, दक्षिणात्, उत्तरात्
रम्यमागतो वासो वा ॥ ११८ ॥

वा दक्षिणात् प्रथमा-सप्तम्या आः । ७ । २ । ११९ ।

अस्माद् दिग्देशार्थात् सिद्धयन्ताद् आ वा स्यात् ।
दक्षिणा, दक्षिणतः, दक्षिणाद्रम्यं वासो वा ॥ ११९ ॥

आहि दूरे । ७ । २ । १२० ।

दूरदिग्देशार्थात् सिद्धयन्ताद् दक्षिणादा, आहिश्च
स्यात् । ग्रामाद् दक्षिणा, दक्षिणाहि रम्यं ग्रामो वा ॥ १२० ॥

वोत्तरात् । ७ । २ । १२१ ।

दिगाद्यर्थादस्मात् सिङ्यन्तादा, आहिश्च वा स्यात्। उत्तरा; उत्तराहि, उत्तरतः, उत्तराद् रम्यं वासो वा ॥१२१॥

## अदूरे एनः । ७ । २ । १२२ ।

दिग्शब्दाददूरदिगाद्यर्थात् सिङ्यन्तादेनः स्यात् । पूर्वेणास्य रम्यं वसति वा ॥ १२२ ॥

## लुबञ्चः । ७ । २ । १२३ ।

अञ्चत्यन्ताद् दिक्शब्दाद् दिगादिवृत्तेः सिङसिङ्यन्ताद् विहितो यो धा, एनो वा, तस्य लुप् स्यात् । प्राग्रम्यमागतो वासो वा ॥ १२३ ॥

## पश्चोऽपरस्य दिक्पूर्वस्य ¹चाऽऽति । ७ । २ । १२४।

अपरस्य केवलस्य, दिगर्थपूर्वपदस्य चाति परे पश्चः स्यात् पश्चात्, दक्षिणपश्चात् रम्यमागतो वासो ॥

## वोत्तरपदेऽर्धे । ७ । २ । १२५ ।

अपरस्य केवलस्य, दिक्पूर्वस्य च अर्धे उत्तरपदे पश्चो वा स्यात् । पश्चार्धम्, अपरार्धम् । दक्षिणपश्चार्द्धः, दक्षिणापरार्द्धः ॥ १२५ ॥

## कृ-भ्वस्तिभ्यां कर्म-कर्तृभ्यां ²प्रागतत्तत्त्वे च्विः । ७ । २ । १२६ ।

कर्मार्थात् कृगा योगे, कर्त्रर्थाच्च भ्वस्तियोगे प्रागभूततद्भावे गम्ये च्विः स्यात् । शुक्लीकरोति पटं, शुक्लीभवति, शुक्लीस्यात् पटः । प्रागिति किम् ? अशुक्लं शुक्लं करोत्येकदा ॥ १२६ ॥

---

१ "अधरापराच्चात्" सूत्राद् आन् तस्मिन् परे। अपरा दिग् पश्चात्, द्वितीय तु दिक्पूर्वस्योदाहरणम् ।

२ प्राक् पूर्वम्, अतत्तत्त्वे–अतस्य तत्त्वे–तद्भावे, अभूततद्भावे गम्ये इति भावः ।

अरुर्मनश्चक्षुश्चेतोरहोरजसां लुक् च्वौ । ७ । २ । १२७ ।

एषां च्वौ अन्तस्य लुक् स्यात् । अरूस्यात् , महाऽरूस्यात् , चक्षूस्यात , चेतीस्यात् , रहीस्यात् , रजीस्यात् ॥

इसुसोर्बहुलम् । ७ । २ । १२८ ।

इस्-उसन्तस्य च्वौ बहुलं लुक् स्यात् । सर्पीकरोति नवनीतम् , धनूस्याद् वंशः । न च भवति सर्पिर्भवति, धनुर्भवति ॥ १२८ ॥

व्यञ्जनस्यान्त ईः । ७ । २ । १२९ ।

व्यञ्जनान्तस्य च्वौ बहुलमीरन्तः स्यात् । दृषदीभवति शिला । न च भवति दृषद्भवति शिला ॥ १२९ ॥

व्याप्तौ स्सात् । ७ । २ । १३० ।

कृभ्वस्तिभ्यां कर्मकर्तृभ्यां प्रागतत्तत्त्वइतिविषये सादिः सात् स्यात् , व्याप्तौ प्रागतत्तत्त्वस्य सर्वात्मना द्रव्येण सम्बन्धे गम्ये । अग्निसात् काष्ठं करोति, अग्निसाद्भवति , अग्निसात् स्यात् ॥ १३० ॥

जातेः सम्पदा च । ७ । २ । १३१ ।

कृभ्वस्तिभिः, सम्पदा च योगे कृग्कर्मणः, भ्वस्तिसम्पत्कर्तुश्च प्रागतत्त्वेन सामान्यस्य व्याप्तौ स्सात् स्यात् । अस्यां सेनायां सर्वं शस्त्रमग्निसात् करोति दैवम् , एवमग्निसाद् भवति , अग्निसात् स्यात् , अग्निसात् सम्पद्यते ॥ १३१ ॥

१ सर्वं काष्ठ पूर्वमनग्निमग्निं करोति अग्निसात् करोति । एवं जलादीनामपि । सर्वं लवण प्राग् अजलं जलं करोति भवति स्याद्वेति जलसात् करोति भवति स्याद् वा । च्विरपि भवति । द्विसकारकरणं षत्वनिषेधार्थम् ।

तत्राऽधीने । ७ । २ । १३२ ।

तत्रेति ङ्यन्ताद् आयत्तेऽर्थे कृभ्वस्तिसम्पद्योगे सात् स्यात् । राजसात्करोति, राजसाद्भवति, राजसात् स्यात् । राजसात् सम्पद्यते ॥ १३२ ॥

देये त्रा च । ७ । २ । १३३ ।

ङ्यन्ताद् देये आयत्तेऽर्थे कृभ्वस्तिसम्पद्योगे त्रा स्यात् । देवत्रा करोति द्रव्यम्, देवत्रा भवेत् स्यात् सम्पद्यते वा । देय इति किम् ? राजसात् स्यात् राष्ट्रम् ॥ १३३ ॥

सप्तमी-द्वितीयाद् देवाऽऽदिभ्यः । ७ ।२। १३४।

एभ्यो ङ्यमन्तेभ्यः स्वार्थे त्रा स्यात् । देवत्रा वसेत्, भवेत्, स्यात्, करोति वा, एवं मनुष्यत्रा । १३४ ॥

तीय-शम्ब-बीजात् कृगा कृषौ डाच् ।७।२। १३५।

तीयान्तात् शम्बबीजाभ्यां च कृग्योगे कृषि विषये डाच् स्यात् । द्वितीया करोति, शम्बा करोति, बीजा करोति क्षेत्रम् । कृषाविति किम् ? द्वितीयं पटं करोति ॥

सङ्ख्याऽऽदेर्गुणात् । ७ । २ । १३६ ।

सङ्ख्याया आद्यवयवात् परो यो गुणः तदन्तात् कृग्योगे कृषि विषये डाच् स्यात् । द्विगुणा करोति क्षेत्रम् ॥ १३६ ॥

समयाद् यापनायाम् ।७ । २ । १३७ ।

अस्मात् कालक्षेपे गम्ये कृग्योगे डाच् स्यात् । समया करोति कालं क्षिपतीत्यर्थः ॥ १३७ ॥

सपत्र-निष्पत्राद् अतिव्यथने ।७ । २ । १३८ ।

आभ्यां कृग्योगेऽतिपीडने गम्ये डाच् स्यात् । सपत्रा करोति मृगम्, निष्पत्रा करोति। अतिव्यथन इति किम्? सपत्रं करोति तरुं सेकः ॥ १३८ ॥

निष्कुलात् निष्कोषणे । ७ । २ । १३९ ।

अस्मात् कृग्योगे निष्कोषणेऽर्थे डाच् स्यात्। निष्कुला करोति दाडिमम्। निष्कोषण इति किम्? निष्कुलं करोति शत्रुम् ॥ १३९ ॥

प्रिय-सुखादानुकूल्ये । ७ । २ । १४० ।

आभ्यां कृग्योगे आनुकूल्ये गम्ये डाच् स्यात् । प्रिया करोति, सुखा करोति गुरुम् । आनुकूल्य इति किम् ? प्रियं करोति साम, सुखं करोति पौषधव्रतम् ॥ १४० ॥

दुःखात् प्रातिकूल्ये । ७ । २ । १४१ ।

दुःखात् प्रातिकूल्ये गम्ये कृग्योगे डाच् स्यात् । दुःखा करोति शत्रुम् । प्रातिकूल्य इति किम् ? दुःखं करोति रोगः ॥ १४१ ॥

शूलात् पाके । ७ । २ । १४२ ।

शूलात् पाके गम्ये कृग्योगे डाच् स्यात् । शूला करोति मांसम् ॥ १४२ ॥

सत्यादशपथे । ७ । २ । १४३ ।

अशपथार्थात् सत्यात् कृग्योगे डाच् स्यात् । सत्या करोति वणिग् भाण्डम् । अशपथ इति किम् ? सत्यं करोति शपथमित्यर्थः ॥ १४३ ॥

मद्र-भद्राद् वपने । ७ । २ । १४४ ।

आभ्यां मुण्डने गम्ये कृग्योगे डाच् स्यात्। मद्रा करोति भद्रा करोति नापितः। वपन इति किम्? मद्रं करोति, भद्रं करोति साधुः ॥ १४४ ॥

अव्यक्ताऽनुकरणाद् अनेकस्वरात् कृभ्वस्तिना। अनितौ द्विश्च। ७। २। १४५।

यस्मिन् ध्वनौ वर्णा विशेषरूपेण नाऽभिव्यज्यन्ते सोऽव्यक्तः। तदनुकरणार्थादनेकस्वराद् अनितिपरात् कृभ्वस्तियोगे डाच् वा स्यात्, द्विश्चास्य प्रकृतिः। पटपटा करोति भवेत् स्यात्। अनेकस्वरादिति किम्? त्वाट् करोति। अनिताविति किम्? पटिति करोति ॥ १४५ ॥

इतावतो लुक्। ७। २। १४६।

अव्यक्तानुकरणस्यानेकस्वरस्य योऽदिति, तस्येति शब्दे लुक् स्यात्। पटिति ॥ १४६ ॥

न द्वित्वे। ७। २। १४७।

अव्यक्तानुकरणस्यानेकस्वरस्य द्वित्वे सति इतौ परेऽतो लुक् न स्यात्। पटत्पटदिति ॥१४७॥

तो वा। ७। २। १४८।

द्वित्वेऽव्यक्तानुकरणस्यानेकस्वरस्यान्त्यस्तो लुग्वा स्यात्। पटत्पटेति करोति, पटत्पटदिति वा ॥ १४८ ॥

डाच्यादौ। ७। २। १४९।

अव्यक्तानुकरणस्यानेकस्वरस्याच्छब्दान्तस्य द्वित्वे सति आद्यतस्तो डाचि लुक् स्यात्। पटपटा करोति। आदाविति किम्? पतपता करोति ॥ १४९ ॥

१ "अव्यक्ताऽनु ." इति द्वित्वम्। डाचो डित्वात् "डित्यन्त्य..." इत्यन्त्यस्वरादेरतो लुक्।

## [1]बह्वल्पार्थात् कारकादिष्टाऽनिष्टे प्शस् ।७।२।१५०।

बह्वल्पार्थाभ्यां कारकवाचिभ्यां यथासङ्ख्यमिष्टेऽनिष्टे च विषये शस् पिद्वा स्यात् । इष्टं प्राशित्रादि । अनिष्टं श्राद्धादि । ग्रामे बहवो बहुशो वा ददाति, एवं भूरिशः। अल्पमल्पशो वा धनं दत्ते श्राद्धे, एवं स्तोकशः । इष्टानिष्ट इति किम् ? बहु दत्ते श्राद्धे, अल्पं प्राशित्रे ॥ १५० ॥

## संख्यैकार्थाद् वीप्सायां शस् । ७ । २ । १५१ ।

सङ्ख्यैकार्थाभ्यां कारकार्थाभ्यां वीप्सायां द्योत्यमानायां शस् वा स्यात् । एकैकमेकशो वा दत्ते, माषं माषं माषशो वा देहि । संख्यैकार्थादिति किम् ? माषौ माषौ दत्ते । वीप्सायामिति किम् ? द्वौ दत्ते ॥१५१ ॥

## सङ्ख्याऽऽदेः पादाऽदिभ्यो दानदण्डे चाकल् लुक् च । ७ । २ । १५२ ।

---

१ षष्ठीवर्जं प्रथमादि सर्वविभक्त्यन्तेभ्यामय प्शस् स्यात्, षष्ठ्या सम्बन्धमात्रत्वेन कारकत्वाभावात् निषेधः । प्रभूतान् स्तोकान् [illegible] मन्त्रान् पठतीति प्रभूतशः, स्तोकशो वा मन्त्रान् पठति । बहुभिर्दृष्टं बहुशो दृष्टम् । बहुभ्यो ददाति बहुशो ददाति । बहुभ्यो वृक्षेभ्यः पतति बहुशो वृक्षेभ्य पतति । बहुषु गृहेषु वर्तते इति बहुशो गृहेषु वर्तते । षष्ठ्या निषेधाद् बहूनामल्पाना वा स्वामीति वाक्यमेव स्यात् । एवं बह्वर्थेभ्योऽल्पार्थेभ्यश्च प्रभूतस्तोकादिभ्य षट्सु विभक्तिषु प्रयोगा भवन्ति । पित्वात् स्त्रीलिङ्गेभ्योऽपि ।

२ एकस्य सङ्ख्यात्वेऽपि एकत्वविशिष्टवस्तुग्रहणाय सूत्रे पृथक् पाठ । 'एकैकमेकशो वा दत्ते' इद सङ्ख्योदाहरणम्, एकत्वस्य सङ्ख्यात्वाद् 'माषशो देहि' इति तु एकत्वविशिष्टवस्तुन उदाहरणम् । एव द्विशः, पञ्चशः, तावच्छः, कतिशः, गणशः, पणशः इति सङ्ख्यार्थैकार्थोदाहरणानि । शसोऽभावे "वीप्सायाम्" (७-४-८०) इति द्वित्वम् । "प्लुप् चादावेकस्य स्यादेः" (७-४-८१) इत्यनेन एकस्य स्यादेः पित् लुप्, स्यात् तेनैकैकमिति सिध्यति ।

सङ्ख्यार्थादवयवात् परे ये पादादयः, तदन्ताद् दाने दण्डे वीप्सायां च विषयेऽकल् स्यात्, तद्योगे च प्रकृतेरन्तस्य लुक्। द्विपदिकां दत्ते दण्डितो भुङ्क्ते वा। एवं द्विशतिकाम् ॥ १५२ ॥

तीयात् टीकण् न विद्या चेत्। ७। २। १५३।

तीयान्तादविद्यार्थात् स्वार्थे टीकण् वा स्यात्। द्वितीयम्, द्वैतीयीकम्। विद्या तु द्वितीया ॥ १५३ ॥

निष्फले तिलात् पिञ्ज-पेजौ। ७। २। १५४।

निष्फलार्थात् तिलादेतौ स्याताम्। तिलपिञ्जः, तिलपेजः ॥ १५४ ॥

प्रायोऽतोर्द्वयसट्-मात्रट्। ७। २। १५५।

अत्वन्तात् स्वार्थे एतौ स्याताम्, यथालक्ष्यम्। यावद्द्वयसम्, यावन्मात्रम् ॥ १५५ ॥

वर्णाऽव्ययात् स्वरूपे कारः। ७। २। १५६।

एभ्यः स्वरूपार्थेभ्यः कारो वा स्यात्। अकारः, ॐकारः। स्वरूप इति किम्? अः-विष्णुः ॥ १५६ ॥

राद् एफः। ७। २। १५७।

वा स्यात्। रेफः। प्रायोऽधिकाराद् रकारः ॥१५७॥

नाम-रूप-भागाद् धेयः। ७। २। १५८।

एभ्यः स्वार्थे धेयो वा स्यात्। नामधेयम्, रूपधेयम्, भागधेयम् ॥ १५८ ॥

मर्ताऽऽदिभ्यो यः। ७। २। १५९।

एभ्यो यः स्यात्। मर्त्यः, सूर्यः ॥ १५९ ॥

**नवाद् ईन-तन-त्नं च नू चास्य । ७ । २ । १६० ।**

नवात् स्वार्थे एते यश्च वा स्युः, तद्योगे च नवस्य नूः । नवीनम् , नूतनम् , नूत्नम्, नव्यम् ।। १६० ।।

**प्रात् पुराणे नश्च । ७ । २ । १६१ ।**

पुराणार्थात् प्रात् न-ईन-तन-त्नाश्च स्युः । प्रणम् , प्रीणम् , प्रतनम् , प्रत्नं पुराणम् ।। १६१ ।।

**देवात् तल् । ७ । २ । १६२ ।**

स्वार्थे वा स्यात् । देवता ॥ १६२

**होत्राया ईयः । ७ । २ । १६३ ।**

स्वार्थे वा स्यात् । होत्रीयम् ।। १६३ ।।

**भेषजादिभ्यः ट्यण् । ७ । २ । १६४ ।**

स्वार्थे वा स्यात् । भैषज्यम् , आनन्त्यम् ।। १६४ ।।

**प्रज्ञाऽऽदिभ्योऽण् । ७ । २ । १६५ ।**

स्वार्थेऽण् वा स्यात् । प्राज्ञः, वाणिजः ।। १६५ ।।

**श्रोत्रौषधि-कृष्णात् शरीर-भेषज-मृगे । ७ । २ । १६६ ।**

एभ्यो यथासङ्ख्यं शरीराद्यर्थेभ्यः स्वार्थेऽण् वा स्यात् । श्रौत्रं वपुः . औषधं भेषजम् , कार्ष्णो मृगः ।।

**कर्म्मणः सन्दिष्टे । ७ । २ । १६७ ।**

सन्दिष्टार्थात् कर्म्मणः स्वार्थेऽण् वा स्यात् । अन्येनान्योऽन्यस्मै यदाह त्वयेदं कार्यमिति तत्सन्दिष्टम् । कार्मणम् ।। १६७ ।।

वाच इकण् । ७ । २ । १६८ ।

सन्दिष्टार्थात् स्यात् । वाचिकं वक्ति ॥ १६८ ॥

विनयाऽऽदिभ्यः । ७ । २ । १६९ ।

स्वार्थे इकण् वा स्यात् । वैनयिकम्, सामयिकम् ॥

उपायाद् ह्रस्वश्च । ७ । २ । १७० ।

स्वार्थे इकण् वा स्यात्, तद्योगे च ह्रस्वः । औपयिकम् ॥ १७० ॥

मृदस्तिकः । ७ । २ । १७१ ।

स्वार्थे वा स्यात् । मृत्तिका, मृत् ॥ १७१ ॥

स-स्नौ प्रशस्ते । ७ । २ । १७२ ।

प्रशस्तार्थात् मृदः सस्नौ वा स्याताम् । मृत्सा, मृत्स्ना ॥ १७२ ॥

इत्याचार्यहेमचन्द्रविरचितायां सिद्धहेमचन्द्राभिधान-स्वोपज्ञशब्दानुशासनलघुवृत्तौ सप्तमस्याध्यायस्य द्वितीयः पादः समाप्तः ॥ ७ । २ ॥



## ॥ तृतीयः पादः ॥

### प्रकृते मयट् । ७ । ३ । १ ।

प्राचुर्येण प्राधान्येन वा कृतं प्रकृतम् । तदर्थात् स्वार्थे मयट् स्यात् । अन्नमयम् , पूजामयम् ॥ १ ॥

### अस्मिन् । ७ । ३ । २ ।

प्रकृतार्थादस्मिन्निति विषये मयट् स्यात् । अपूपमयं पर्व ॥ २ ॥

### तयोः समूहवच्च बहुषु । ७ । ३ । ३ ।

प्रकृतेऽस्मिन्निति च विषययोर्बह्वर्थात् समूह इव प्रत्ययः स्यात् , मयट् च । आपूपिकम् , अपूपमयम् अपूपास्तत्पर्व वा ॥ ३ ॥

### निन्द्ये पाशप् । ७ । ३ । ४ ।

निन्द्यार्थात् स्वार्थे पाशप् स्यात् । छान्दसपाशः ॥४॥

### प्रकृष्टे तमप् । ७ । ३ । ५ ।

प्रकृष्टार्थात् तमप् स्यात् । शुक्लतमः, कारकतमः ॥५॥

### द्वयोर्विभज्ये च तरप् । ७ । ३ । ६ ।

द्वयोर्मध्ये प्रकृष्टे विभज्ये च वर्त्तमानात् तरप् स्यात् । पटुतरा स्त्री, साङ्काश्यकेभ्यः पाटलिपुत्रका आढ्यतराः ॥

### क्वचित् स्वार्थे । ७ । ३ । ७ ।

यथालक्ष्यं स्वार्थे तरप् स्यात् । अभिन्नतरकम् , उच्चैस्तराम् ॥ ७ ॥

## किम्-त्याद्येऽव्ययादसत्त्वे तयोरन्त-स्याम् । ७ । ३ । ८ ।

किमस्त्याद्यन्ताद् एकारान्तादव्ययाच्च परयोस्तमप्-तरपोरन्तस्याम् स्यात्, न चेत् तौ सत्त्वे द्रव्ये वर्तेते । किन्तराम्, किन्तमाम्, पचतितराम्, पचतितमाम्, पूर्वाह्णेतराम्, पूर्वाह्णेतमां भुङ्क्ते, अतितराम्, अतितमाम्, असत्त्व इति किम् ? किन्तरं दारु ॥ ८ ॥

## गुणाङ्गाद् वेष्ठेयसू । ७ । ३ । ९ ।

गुणप्रवृत्तिहेतुकात् तमप्तरपोर्विषये यथासङ्ख्यमेतौ वा स्याताम् । पटिष्ठः, पटुतमः । गरीयान्, गुरुतरः ॥९॥

## त्यादेश्च प्रशस्ते रूपप् । ७ । ३ । १० ।

त्याद्यन्तात् नाम्नश्च प्रशस्तार्थाद् रूपप् स्यात् । पचतिरूपम्, दस्युरूपम् ॥ १० ॥

## अतमबादेरीषदसमाप्ते कल्पप्-देश्यप्-देशीयर् । ७ । ३ । ११ ।

---

१ तिवाद्याख्यातप्रत्ययान्तेभ्य । द्व्यधिकविभज्ये प्रकृष्टे तमप्, द्वयोर्मध्ये विभज्ये प्रकृष्टेऽर्थे तु तरप् स्यात् । पित्वात् स्त्रियामपि । इदमनयोरतिशयेन किं पचति किंतरा पचति । इदमेषामतिशयेन किं पचति किन्तमा पचति । एव पचतितरा, पचतितमाम् । तयोः तरप्-तमपोरित्यर्थ ।

२ तिवाद्यन्तेभ्यो रूपप्कल्पप्देश्यप्देशीयर्प्रत्ययेषु नपुसकलिङ्गमेकवचनं च भवत, तिवाद्यन्ताना क्रियाप्रधानत्वात् तस्याश्च साध्यत्वेन लिङ्गसङ्ख्याऽसभवात् यथा प्रशस्तं पचति पचतिरूपम्, द्वित्वे पचतोरूपम्, बहुत्वे पचन्तिरूपम् । प्रभूतरूपम् ईषदसमाप्त गच्छन्ति इति गच्छन्तिकल्पम् । एव देश्यादिष्वपि । नाम्नस्तु प्रकृतिलिङ्ग द्विबहुवचनेऽपि च भवत, यथा पटुदेशीय पुरुष, पटुदेशीया स्त्री च । एव पटुदेशीयौ पुरुषावित्यादि ।

किञ्चिदसमासार्थात् त्याद्यन्तात् तमवाद्यन्तवर्जादेते स्युः। पचतिकल्पम्, पचतिदेश्यम्, पचतिदेशीयम्, पटुकल्पा, पटुदेश्या, पटुदेशीया ॥ ११ ॥

नाम्नः प्राग् बहुर्वा । ७ । ३ । १२ ।

ईषदपरिसमाप्तार्थात् नाम्नः प्राग् बहुर्वा स्यात्। बहुपटुः, पटुकल्पः ॥ १२ ॥

न तमवादिः कपोऽच्छिन्नाऽऽदिभ्यः। ७। ३। १३।

छिन्नादिवर्जाद् यः कप्, तदन्तात् तमवादिर्न स्यात्। अयमेषामनयोर्वा प्रकृष्टः पटुकः। अच्छिन्नादिभ्य इति किम्? छिन्नकतमः ॥ १३ ॥

अनत्यन्ते । ७ । ३ । १४ ।

अनत्यन्तार्थात् कबन्तात् तमवादिर्न स्यात्। इदमेषामनयोर्वा प्रकृष्टं छिन्नकम्, भिन्नकम् ॥ १४ ॥

यावाऽऽदिभ्यः कः । ७ । ३ । १५ ।

स्वार्थे कः स्यात्। यावकः, मणिकः ॥ १५ ॥

कुमारीक्रीडनेयसोः । ७ । ३ । १६ ।

कुमारीणां यत् क्रीडनं तदर्थाद्, ईयस्वन्ताच्च स्वार्थे कः स्यात्। कन्दुकः, श्रेयस्कः ॥ १६ ॥

लोहितात् मणौ । ७ । ३ । १७ ।

अस्मात् मण्यर्थात् स्वार्थे को वा स्यात्। लोहितको मणिः, लोहितो मणिः ॥ १७ ॥

रक्ताऽनित्यवर्णयोः । ७ । ३ । १८ ।

लाक्षादिरक्तार्थाद् अनित्यवर्णार्थाच्च लोहितात् को वा स्यात्। लोहितकः पटः, लोहितकमक्षि कोपेन ॥१८॥

कालात् । ७ । ३ । १९ ।

कज्जलादिरक्तेऽनित्यवर्णे च वर्त्तमानात् कालात् को वा स्यात्। काल एव कालकः पटः, कालकं मुखं शोकेन ॥ १९ ॥

शीतोष्णादृ ऋतौ । ७ । ३ । २० ।

आभ्यामृत्वर्थाभ्यां को वा स्यात्। शीतकः, उष्णक ऋतुः ॥ २० ॥

लून-वियातात् पशौ । ७ । ३ । २१ ।

आभ्यां पश्वर्थाभ्यां को वा स्यात्। लूनकः, वियातकः पशु ॥ २१ ॥

स्नाताद् वेदसमाप्तौ । ७ । ३ । २२ ।

अस्यां गम्यायां स्नातात् कः स्यात्। वेदं समाप्य स्नातः स्नातकः ॥ २२ ॥

तनु-पुत्राऽणु-बृहती-शून्यात् सूत्र-कृत्रिम-निपुणा-ऽऽच्छादन-रिक्ते । ७ । ३ । २३ ।

तन्वादिभ्यो यथासंख्यं सूत्राद्यर्थेभ्यः कः स्यात्। तनुकं सूत्रम्, पुत्रकः कृत्रिमः, अणुको निपुणः, बृहतिका आच्छादनम्, शून्यको रिक्तः ॥ २३ ॥

भागेऽष्टमात् ञः । ७ । ३ । २४ ।

भागार्थादस्मात् ञो वा स्यात्। आष्टमो भागः ॥२४॥

षष्ठात् । ७ । ३ । २५ ।

अस्माद् भागार्थात् ञो वा स्यात् । षाष्ठो भागः ॥

मानेकश्च । ७ । ३ । २६ ।

मीयते येन तद्रूपभागार्थात् षष्ठात् को ञश्च वा स्यात् । षष्ठकः, षाष्ठः भागो मानं चेत् ।. २६ ॥

एकादाकिन् चाऽसहाये । ७ । ३ । २७ ।

असहायार्थादेकाद् आकिन् कश्च स्यात् । एकाकी, एककः ॥ २७ ॥

प्राक् नित्यात् कप् । ७ । ३ । २८ ।

*नित्यसङ्कीर्तनात् प्राग् येऽर्थास्तेषु वोत्येषु कप् अधिकृतो ज्ञेयः । कुत्सितोऽल्पोऽज्ञातो वाऽश्वः–अश्वकः ॥ २८ ॥*

त्यादि-सर्वाऽऽदेः स्वरेष्वन्त्यात् पूर्वो-ऽक् । ७ । ३ । २९ ।

त्याद्यन्तस्य, सर्वादेश्च स्वराणां मध्ये योऽन्त्यस्वरः तस्मात् पूर्वोऽक् स्यात् . प्राग् नित्यात् कुत्सितमल्प मज्ञातं वा पचति पचतकि, सर्वके. विश्वके ॥ २९ ॥

[1]युष्मदस्मदोऽसोभादिस्यादेः । ७ । ३ । ३० ।

अनयोः स-ओ-भादिवर्जस्याद्यन्तयोः स्वरेष्वन्त्यात् पूर्वोऽक् स्यात् । त्वयका, मयका । असोभादिस्यादेरिति किम् ? युष्मकासु, युवकयोः, युवकाभ्याम् ॥ ३० ॥

अव्ययस्य को द् च । ७ । ३ । ३१ ।

१ युष्मकासु इति सादे, द्वितीयमोकारादे, अन्त्य तु मादे प्रत्युदाहरणं ज्ञेयम् । एतेषु प्रत्युदाहरणेषु युष्मदस्मदोरन्त्यस्वरात् पूर्वोऽक् पूर्वसूत्राप्प्राप्त नानेनेति।

प्राक् नित्याद्येऽर्थास्तेषु द्योत्येष्वव्ययस्य स्वरात् पूर्वोऽक् स्यात्, तद्योगे, चाऽस्य को द्[1]। कुत्सितादुच्चैः उच्चकैः, एवं धिक्, धकिद् ॥ ३१ ॥

## तूष्णीकाम् । ७ । ३ । ३२ ।

तूष्णीमो मः प्राक् का इत्यन्तो निपात्यः, प्राक् नित्यात्। कुत्सितादि तूष्णीं तूष्णीकामास्ते ॥ ३२ ॥

## कुत्सिताऽल्पाऽज्ञाते । ७ । ३ । ३३ ।

कुत्सिताद्यपाधिकार्थात् यथायोगं कपादयः स्युः । अश्वकः, पचतकि, उच्चकैः ॥ ३३ ॥

## अनुकम्पा-तद्युक्तनीत्योः । ७ । ३ । ३४ ।

अनुकम्पायां तद्युक्तायां च नीतौ गम्यायां यथायोगं कपादयः स्युः । पुत्रकः, स्वपिषकि, पुत्रकः, एहकि, उत्सङ्गके उपविश, कर्दमकेनाऽसि दिग्धकः ॥ ३४ ॥

## अजातेर्नृनाम्नो बहुस्वरात् इयेकेलं वा । ७ । ३ । ३५ ।

मनुष्यनाम्नो बहुस्वरादनुकम्पायां एते वा स्यु, न चेत् नृनामजात्यर्थम् । देवियः[2], देविकः, देविलः, देवदत्तकः । अजातेरिति किम् ? महिषकः ॥ ३५ ॥

## वोपादेरडाऽकौ च । ७ । ३ । ३६ ।

---

१ ककारान्तस्याव्ययस्य दकारान्तादेशो भवतीत्यर्थ । यथा धिक्-इत्यस्य अकि दकारे च जाते धकिद्, पृथक्-हिरुक्-इत्यनयो पृथकद् हिरुकिति स्यात् । यथोऽपवाद । कुत्सितमल्पम ज्ञातमुच्चैरित्यर्थ कुत्सिताद्यर्थैरित्युक्तम् ।

२ अनुकम्पितो देवदत्तो देविय इत्यादि । "द्वितीयात् स्वरादूर्ध्वम्" (७-३-४१) इत्यनाल्लुक । एवं इक-इल-अड-अकादिष्वपि ।

उपपूर्वाद्जात्यर्थाद् घट्स्वरात् नृनाम्नोऽनुकम्पाया-मडाकौ, इय-इक-इलाश्च वा स्युः । उपडः, उपकः, उपियः, उपिकः, उपिलः, उपेन्द्रदत्तकः ॥ ३६

## ऋवर्णोवर्णात् स्वरादेरादेर्लुक् प्रकृत्या च । ७ । ३ । ३७ ।

ऋवर्णान्तोवर्णान्ताभ्यां परस्यानुकम्पोत्पन्नस्य स्वरादेः प्रत्ययस्याऽऽदेर्लुक् स्यात्, लुकि तु सति प्रकृतेः प्रकृतिः । मातृयः, मातृकः, मातृलः, वायुयः, वायुकः, वायुलः । स्वरादेरिति किम्? मद्रबाहुकः ॥ ३७ ॥

## लुक्युत्तरपदस्य कपन् । ७ । ३ । ३८ ।

नृनाम्नो यदुत्तरपदं तस्य, "ते लुग्" (पृ० १८२)वा इति लुकि सति ततः कपन् स्यात्, अनुकम्पायां गम्यायाम् । देवदत्ता । लुकि, देवी । अनुकम्पिताऽसौ देवका । उत्तर-पदस्येति किम्? दत्तिका ॥ ३८ ॥

## लुक् चाऽजिनान्तात् । ७ । ३ । ३९ ।

अजिनान्तात् नृनाम्नोऽनुकम्पायां कपन् स्यात्, तद्योगे च लुगुत्तरपदस्य । व्याघ्रकः ॥ ३९ ।

## षड्वर्जैकस्वरपूर्वपदस्य स्वरे । ७ । ३ । ४० ।

षड्वर्जमेकस्वरं पूर्वपदं यस्य, तस्योत्तरपदस्यानुक-म्पाऽर्थे स्वरादौ प्रत्यये लुक् स्यात्। अनुकम्पितो वागाशी वाचियः । षड्वर्जेत्यादीति किम्? उपेन्द्रेण दत्त. उपेन्द्र-दत्तः, सोऽनुकम्पित उपडः, षडङ्गुलिस्तु षडियः । स्वर इति किम्? वागाशीर्दत्तकः ॥ ४० ॥

---

१ कपन् इति प्रत्यय पकारानुबन्ध पुंवद्भावार्थ । नकार "इच्चा (२-४-१०७) इत्यत्र पर्युदासार्थ ।

## द्वितीयात् स्वरादूर्ध्वम् । ७ । ३ । ४१ ।

अनुकम्पाऽर्थे स्वरादौ प्रत्यये प्रकृतेर्द्वितीयात् स्वरादूर्ध्वं लुक् स्यात् । देवियः ॥ ४१ ॥

## सन्ध्यक्षरात् तेन । ७ । ३ । ४२ ।

अनुकम्पाऽर्थे स्वरादौ प्रत्यये प्रकृतेर्द्वितीयात् सन्ध्यक्षरस्वरादूर्ध्वं तेन सन्ध्यक्षरेण सह लुक् स्यात् । कुवियः, कुहिकः ॥ ४२ ॥

## शेवलाद्यादेस्तृतीयात् । ७ । ३ । ४३ ।

शेवलादिपूर्वपदस्य नृनाम्नोऽनुकम्पाऽर्थे स्वरादौ प्रत्यये 'तृतीयात् स्वरादूर्ध्वं लुक् स्यात् । शेवलिय, सुपरियः ॥ ४३ ॥

## क्वचित् तुर्यात् । ७ । ३ । ४४ ।

अनुकम्पोत्पन्ने स्वरादौ प्रत्यये यथालक्ष्यं चतुर्थात् स्वरादूर्ध्वं लुक् स्यात् । बृहस्पतियः । क्वचिदिति किम् ? उपडः ॥ ४४ ॥

## पूर्वपदस्य वा । ७ । ३ । ४५ ।

अनुकम्पाऽर्थे स्वरादौ प्रत्यये पूर्वपदस्य लुग् वा स्यात् । दत्तियः, देवियः ॥ ४५

## ह्रस्वे । ७ । ३ । ४६ ।

'१ आदितो गणनया यस्तृतीयः स्वरस्ततः परे एकोऽनेके वा वर्णास्तेषां लुक् स्यात् । अनुकम्पितः शेवलदत्तः इति शेवलिय इत्यत्र इये प्रत्यये परे तृतीयात् स्वरादूर्ध्वस्यस्य दत्तइत्यस्य लुग्जातः ।

ह्रस्वार्थात् यथायोगं कबादिः स्यात्। पटकः, पचतकि ॥ ४६ ॥

कुटी-शुण्डाद् रः । ७ । ३ । ४७ ।

आभ्यां ह्रस्वार्थाभ्यां रः स्यात्। कुटीरः, शुण्डारः ॥

शम्या रु-रौ । ७ । ३ । ४८ ।

अस्माद् ह्रस्वार्थादेतौ स्याताम्। शमीरुः, शमीरः ॥

कुत्वा डुपः । ७ । ३ । ४९ ।

अस्मात् ह्रस्वार्थात् डुपः स्यात्। कुतुपः ॥४९॥

कासू-गोणीभ्यां तरट् । ७ । ३ । ५० ।

आभ्यां ह्रस्वार्थाभ्यां तरट् स्यात्। कासूतरी, गोणीतरी ॥ ५० ॥

वत्सोक्षाऽश्वर्षभाद् ह्रासे पित् । ७ । ३ । ५१ ।

एभ्यः स्वप्रवृत्तिहेतोर्ह्रासे गम्ये तरट् पित् स्यात्। वत्सतरः, उक्षतरः, अश्वतरः, ऋषभतरः ॥ ५१ ॥

वैकाद् द्वयोर्निर्धार्ये डतरः । ७ । ३ । ५२ ।

एकाद् द्वयोरेकस्मिन् निर्धार्येऽर्थे डतरो वा स्यात्। एकतरः, एकको वा भवतोः कठः पटुर्गन्ता चैत्रो दण्डी वा ॥ ५२ ॥

यत्-तत्-किमन्यात् । ७ । ३ । ५३ ।

एभ्यो द्वयोरेकस्मिन्निर्धार्येऽर्थे वर्त्तमानेभ्यो डतरः स्यात्। यतरो भवतोः कठादिस्ततर आगच्छेत्, एवं कतरः, अन्यतरः ॥ ५३ ॥

बहूनां प्रश्ने डतमश्च वा । ७ । ३ । ५४ ।

यदादिभ्यो बहूना मध्ये निर्द्धार्यार्थेभ्यः प्रश्ने डतमो डतरश्च वा स्यात्। यतमो यतरो वा भवतां कठस्ततरस्ततमो वा यातु। एवं कतमः, कतरः। अन्यतम', अन्यतरः। पक्षे, यको यो वा। सकः, स वा भवतां कठ इत्यादि ॥ ५४ ॥

वैकात्। ७। ३। ५५।

एकाद् बहूनां मध्ये निर्द्धार्यार्थात् डतमो वा स्यात्। एकतमः, एककः, एको वा भवतां कठः ॥ ५५ ॥

क्तात् तमबादेश्चानत्यन्ते। ७। ३। ५६।

क्तान्तात् केवलात् तमबाद्यन्ताच्चानत्यन्तार्थात् कप् स्यात्। अनत्यन्तं भिन्नं भिन्नकम्, भिन्नतमकम्, भिन्नतरकम् ॥ ५६ ॥

न सामिवचने। ७। ३। ५७।

अर्द्धवचने उपपदे अनत्यन्तार्थात् क्तान्तात् केवलात् तमबाद्यन्ताच्च कप् न स्यात्। सामि अनत्यन्तं भिन्नम्, अर्द्धमनत्यन्तं भिन्नम् ॥ ५७ ॥

नित्यं ञ-ञिनोऽण्। ७। ३। ५८।

ञञिनन्तात् स्वार्थे नित्यमण् स्यात्। व्यावक्रोशी, साङ्कोटिनम् ॥ ५८ ॥

विसारिणो मत्स्ये। ७। ३। ५९।

---

१ सामि अर्धपर्यायम्। वचनपाठात् पर्यायशब्दानामपि नेमार्धादीनां ग्रहण स्यात्। अर्धमनत्यन्त भिन्नतमं भिन्नतरम्। अन्ये तु समास एव मन्यन्ते सामिकृतमित्यादि।

अस्मात् मत्स्यार्थात् स्वार्थेऽण् स्यात्। वैसारिणो मत्स्यः । ५९ ॥

पूगादमुख्यकात् ञ्यो द्रिः । ७ । ३ । ६० ।

नानाजातीया अनियतवृत्तयोऽर्थकामप्रधानाः सङ्घाः पूगाः। तदर्थात् स्वार्थे ञ्यो द्रिः स्यात्, न चेत् पूगार्थं मुख्यार्थकान्तम्। लौहध्वज्यः, लोहध्वजाः[१]। अमुख्यकादिति किम्? देवदत्तकः पूगः ॥ ६० ॥

व्रातादस्त्रियाम्। ७ । ३ । ६१ ।

नानाजातीया अनियतवृत्तयः शरीरायासजीविनः सङ्घा व्राताः। तदर्थादस्त्रियां स्वार्थे ञ्यो द्रि स्यात्। कापोतपाक्यः, स्त्री तु कपोतपाका ॥ ६१ ॥

शस्त्रजीविसङ्घात् ञ्यड् वा । ७ । ३ । ६२ ।

एतदर्थात् स्वार्थे द्रिर्ञ्यड् वा स्यात्। शाबर्यः। शबराः, पुलिन्दाः। पक्षे, शबरः। सङ्घादिति किम्? बागुरः ॥ ६२ ॥

वाहीकेष्वब्राह्मण-राजन्येभ्यः । ७ । ३ । ६३ ।

एषु यः शस्त्रजीविसङ्घो ब्राह्मणराजन्यवर्जः तदर्थात् स्वार्थे द्रिर्ञ्यट् स्यात्। कौण्डीविश्यः, कुण्डीविशाः। अब्राह्मणेत्यादीति किम्? गौपालि, राजन्यः ॥ ६३ ॥

वृकात् टेण्यण् । ७ । ३ । ६४ ।

वृकात् शस्त्रजीविसङ्घार्थात् स्वार्थे टेण्यण् द्रिः स्यात्। वार्केण्यः ॥ ६४ ॥

१ द्रिवरणात् बहुत्वेऽस्त्रिया प्रत्ययटप् स्यात्। यथा लोहध्वजा इति।

## यौधेयाऽऽदेरञ् । ७ । ३ । ६५ ।

एभ्यः शस्त्रजीविसंघार्थेभ्योऽञ् द्रिः स्यात् । यौधेयः, घार्तेयः ॥ ६५ ॥

## पर्श्वादेरण् । ७ । ३ । ६६ ।

एभ्यः शस्त्रजीविसंघार्थेभ्यः स्वार्थेऽण् द्रिः स्यात् । पार्शवः, राक्षसः ॥ ६६ ॥

## दामन्यादेरीयः । ७ । ३ । ६७ ।

एभ्यः शस्त्रजीविसंघार्थेभ्यः स्वार्थे ईयो द्रिः स्यात् । दामनीयः, औलपीयः ॥ ६७ ॥

## श्रुमत्-शमीवत्-शिखावत्-शालावदूर्णावत्-विद-भृदभिजितो गोत्रेऽणो यञ् । ७ । ३ । ६८ ।

एभ्यो गोत्राऽणन्तेभ्य. स्वार्थे यञ् द्रिः स्यात् । श्रौमत्यः, शामीवत्यः, शैखावत्यः, शालावत्यः, और्णावत्यः, वैदभृत्यः, आभिजित्यः ॥ ६८ ॥

## [1]समासान्तः । ७ । ३ । ६९ ।

अतः परं विधास्यमानं समासस्यावयवः स्यात्, तदन्तस्य तत्तत्समाससंज्ञा। सुजम्भे, सुजम्भानौ स्त्रियौ, उपधुरम् , त्रिधुरी, स्रक्त्वचिनी ॥६९॥

## न किमः क्षेपे । ७ । ३ । ७० ।

१ इदमधिकारसूत्रम् । पादपरिसमाप्तिं यावदस्यानुवृत्तिः । अतःपरं ये प्रत्यया वक्ष्यन्ते ते समासस्यान्ता अवयवा भवन्ति तद्ग्रहणेन गृह्यन्ते । प्रयोजनं चास्य बहुव्रीहि-अव्ययीभाव-द्विगु-द्वन्द्व-कर्मधारयादिसमासग्रहणे. ।

निन्दार्थात् किमः परं यद् ऋगादिस्तदन्तात् समासात् समासान्तो न स्यात्। किंधूः, किंसखा। क्षेप इति किम् ? केषां राजा किंराजः ॥ ७० ॥

नञ्तत्पुरुषात् । ७ । ३ । ७१ ।

अस्मात् समासान्तो न स्यात्। अनृक्, अराजा। तत्पुरुषादिति किम् ? न विद्यते धूः अस्याधुरं शकटम् ॥

पूजा-स्वतेः प्राक् टात् । ७ । ३ । ७२ ।

पूजार्थस्वतिभ्यां परं यदृगादि तदन्तात् टात् प्राग् यः समासान्तः, स न स्यात्। सुधूः, अतिधूरियम्। पूजेति किम् ? अतिराजोऽरिः। प्राग् टादिति किम्? स्वङ्गुलं काष्ठम् ॥ ७२ ॥

बहोर्डः । ७ । ३ । ७३ ।

डस्य प्राप्तिर्यतस्ततः समासान्तो डः कच्च न स्यात्। उपबहवो घटाः। ड इति किम् ? प्रियबहुकः ॥७३॥

इच् युद्धे । ७ । ३ । ७४ ।

युद्धे यः समास उक्तस्तस्मादिच् समासान्तः स्यात्। केशाकेशि ॥ ७४ ॥

द्विदण्ड्यादिः । ७ । ३ । ७५ ।

एते इजन्ताः साधवः स्युः। द्विदण्डि हन्ति, उभादन्ति ॥ ७५ ॥

ऋक्-पूः-पथ्यपोऽत् । ७ । ३ । ७६ ।

---

१ कुत्सितार्थोऽत्र किंशब्द कुत्सित सखा किंसखा, एवं किंराजत्यादिषु क्षेपार्थत्वात् समासान्तत्व ■ किं तु "किं क्षेप" (पृ० १५२) सूत्रेण तत्पुरुष कर्मधारय समास। त्वे समासान्तत्वे तु कस्य केषां वा राजा किंराज इत्यत्र " राजन् सखे (७-३-१०२) सूत्रादट् स्यात्।

ऋगाद्यन्तात् समासादत् समासान्तः स्यात् । अर्द्धर्चः, त्रिपुरम्, जलपथः, द्वीपम् ॥ ७६ ॥

धुरोऽनक्षस्य । ७ । ३ । ७७ ।

धुरन्तात् समासादत् समासान्तःस्यात्, चेद् धूर्नाक्षस्य । राजधुरा । अनक्षस्येति किम् ? अक्षधूः ॥ ७७ ॥

सङ्ख्या-पाण्डूदक्-कृष्णाद् भूमेः । ७ । ३ । ७८ ।

सङ्ख्याऽर्थात् पाण्ड्वादेश्च परो यो भूमिस्तदन्तादत् समासान्तः स्यात् । द्विभूमम् , पाण्डुभूमम् , उदग्भूमम्, कृष्णभूमम् ॥ ७८ ॥

उपसर्गादध्वनः । ७ । ३ । ७९ ।

उपसर्गाद् धातुयोग्यात् प्रादेः परादध्वनो अः समासान्तः स्यात् । प्राध्वो रथः ॥ ७९ ॥

समवाऽन्धात् तमसः । ७ । ३ । ८० ।

एभ्यः परो यस्तमस् तदन्तादत् समासान्तः स्यात् । सन्तमसम्, अवतमसं, अन्धतमसम् ॥ ८० ॥

तप्तान्ववाद् रहसः । ७ । ३ । ८१ ।

तप्तादिपूर्वो यो रहस् तदन्तादः समासान्तः स्यात् । तप्तरहसम्, अनुरहसम्, अवरहसम् ॥ ८१ ॥

प्रत्यन्ववात् साम-लोम्नः । ७ । ३ । ८२ ।

एभ्य परौ यौ सामलोमानौ तदन्तादः समासान्तः स्यात् । प्रतिसामम्, अनुसामम्, अवसामम् , प्रतिलोमः, अनुलोमः, अवलोमः ॥ ८२ ॥

ब्रह्म-हस्ति-राजपल्याद् वर्चसः । ७ । ३ । ३८ ।

